भेदानन्यत्वात् सामान्यानन्यत्वात्—इति च हेतुद्वयमसिद्धमेव स्यात् । कथं पक्षावस्थायामङ्गीकृतभेदो हेत्ववस्थायामनन्यत्वं ब्रूयात् । तदेतदाह—

सामान्यांशं तु निष्कृष्य भेदो येन प्रसाध्यते ॥५८॥
तस्य हेतोरसिद्धत्वम्

इति । हेत्वसिध्यनङ्गीकारेण तु पूर्वत एव दोष इत्याह—

सिद्धश्चेत् सिद्धसाध्यता ।

इति । अपरमप्यत्र दूषणमास्ते एव—निष्कर्ष एवात्र न शक्यते कर्तुम्—इति । नह्यत्र वस्तुद्वयप्रतिभानमस्ति—अयमस्य सामान्यांशः अयमस्य विशेषांशः—इति अभेदेनैव प्रतिभासनात् इत्युक्तम् । इदमङ्गीकृत्यैव प्रौढिवादेन दूषणान्तरमुक्तमिति द्रष्टव्यम् ।

नन्वेवमप्यनेकाकारे वस्तुन्येकाकारा प्रतीतिरलीकैव प्राप्नोति । न प्राप्नोति । ग्रहणे परस्परनिरपेक्षत्वात्तेषामकारणत्वादित्युक्तं शून्यवादे । यदि नास्त्येवान्यतरप्रतिभासोऽपि उद्भवाभिभवात्मकत्वे तु विशेषः—इत्युपरिष्टाद्वक्ष्यामः । तेनात्रापि यदा यदा विशेषरूपेण सामान्यात्मकं वस्तु गृह्यते तदा तदा प्रत्यस्तमितान्यद्रूपं इति विशेषमात्रेणैवैकेन प्रतिभातीत्याह—

भेदेभ्योऽनन्यरूपेण सामान्यं गृह्यते यदा ॥५९॥
तदा विशेषमात्रेण वस्तु प्रत्यवभासते ।

इति । तेन विशेषग्रहणकाले सामान्यं तद्ग्रहणानुगुणं स्थितं यदि परमगृह्यमाणत्वेनैवासदित्युच्यते न पारमार्थिकासत्त्वादित्याह—

तदुद्भूत्या च सामान्यं तद्बोधानुगुणं स्थितम् ॥६०॥
सदप्यग्राह्यरूपत्वादसद्वत् प्रतिभासते ।

इति । अनेनैव मार्गेण यदा विशेषात्मकं वस्तु सामान्यरूपेण गृह्यते तदा प्रत्यस्तमिताशेषविशेषं सामान्यमात्रमेव प्रतीयते । विशेषास्तु तद्ग्रहणेऽनुगुणाः सन्तोऽप्यगृह्यमाणत्वादसन्त इव प्रतिभान्ति न पारमार्थिकासत्त्वादित्याह—

विशेषः
तदा सामान्यतन्त्रत्वमेवमेव प्रतीयते ।

इति । एकग्रहणे परं तद्ग्रहणानुगुणं तिष्ठतीत्युक्तं न प्रतिभातीति च । तत्राप्रतिभासमानं कथं तदनुगुणमिति वक्तव्यम् । तदुच्यते—पूर्वप्रतिभासितसामान्यविशेषाङ्गीकरणेनैवैतद्द्वयं प्रतिभाति । इतरग्रहणे परमस्यानुगुण्यमुक्तम् । अप्रतिभासमानं चोत्तरविज्ञाने । तेनैदंशावेतौ प्रत्ययौ—योऽयं गौः स शाबलेयः । यः शाबलेयः स गौः—इत्यालीढान्यतरप्रत्यय परप्रत्ययो भवतीत्येतावान् । किं च यदपीदं चोदितम्—कथमनेकाकारे वस्तुन्येकाकारा प्रतीतिः—इति तत्तावत् परिहृतमेव । अपि च अव्यापकमिदं चोद्यम् । यतो न सर्वदैवैकाकारा बुद्धिः । निर्विकल्पकावस्थायां प्रलीनसमस्तभेदाभेदविकल्पं विचित्ररूपं वस्तु प्रतिभातीत्युक्तम्—निर्विकल्पकबोधेऽपि—इत्यत्र । तदेतदाह—

यदा तु शबलं वस्तु युगपत् प्रतिपद्यते ॥ ६२ ॥
तदान्यानन्यभेदादि सर्वमेव प्रलीयते ।

इति । अन्यानन्यविकल्पविशेषाः प्रलीयन्ते इत्यर्थः । न पुनर्भेदाभेदावेव न प्रतीयेते इति द्रष्टव्यं पूर्वोक्तविरोधप्रसङ्गात् ।

कस्मात् पुनर्निर्विकल्पेनेव सविकल्पेनाप्युभयरूपमेव तन्न प्रतीयते । उच्यते — सविकल्पं हि शब्दोल्लेखपूर्वकम् । न चोभयात्मकस्य वस्तुनः कश्चिच्छब्दो बोधको लोके प्रसिद्धः । सर्वो हि शब्दोऽन्वयव्यतिरेकनिर्धारितान् सामान्यांशानवलम्ब्य प्रवर्तते । तस्मान्न चित्रस्य वस्तुनः सविकल्पकग्रहणसम्भवोऽस्तीति । तदेतदाह-

न च तत्तादृशं शब्दः कश्चिच्छक्नोति भाषितुम् ॥ ६३ ॥
सामान्यांशानपोद्धृत्य पदं सर्वं प्रवर्तते ।

इति । अत एव च—यथाविधं वस्तु न तथाविधं शब्देन स्पृश्यते । केवलमविद्यापरिकल्पितान् वस्तुभागान् परिकल्प्य पदं सर्वं प्रवर्तते । तेनासन्त एव

पदार्थाः—इति केचित् भ्रान्तचेतसः प्रतिपन्नाः। न चैतत् सत्यम्। यतो यद्यपि समस्तं वस्तु न शब्देन स्पृश्यते तथापि किमेतावता वस्तुभागावलम्बिनापि तेन न भवितव्यम्। तस्मात् पारमार्थिकवस्तुभागावलम्बी शब्दः नार्थसंस्पर्शी इति वाच्यम्। तदेतत् पराभिप्रायेण सह सर्वमाह—

समस्तवस्त्वपेक्षां च पदार्थानामपोद्धृतिम् ॥६४॥
केचिदाहुरसद्रूपामंशत्वं तु न वार्यते।

इति। अत्र व्यालिराह—पिण्डसारूप्यमेव सामान्यम्—इति। तत्रायं सामान्यशब्द एकपर्यायो वा स्यात् यथा देवदत्तयज्ञदत्तयोः समानधनम्। एकधनमित्यर्थः। सदृशपर्यायो वा। अस्ति च सदृशपर्यायः यथा—देवदत्तो यज्ञदत्तेन सह समानरूपः सदृशरूप इत्यर्थः। तदत्र किंवचनोऽभिप्रेत इति परमतमनुभाष्य पृच्छति—

सारूप्यमेव पिण्डानां सामान्यं येन कल्प्यते ॥६५॥
तेन सारूप्यशब्देन किं पुनः प्रतिपाद्यते।

इति। तत्र यदि तावदभिन्नवचनः ततोऽयमर्थः—पिण्डानां सारूप्यमेकरूपत्वम्—इति। ततश्चास्मदभीष्टा जातिरेव नामान्तरतः प्राप्तेत्याह—

समानरूपभावश्चेज्जातिः सास्माभिरिष्यते ॥६६॥

इति। यदि तु सदृशार्थः ततः प्रतियोगिसापेक्षत्वात् सादृश्यस्य कस्य पिण्डस्य केन पिण्डेन तदिति वाच्यम्। न च तच्छक्यमित्यभिप्रायेणाह—

सादृश्यमथ सारूप्यं कस्य केनेति कथ्यताम्।

इति। ननु च किमिति न शक्यते। शाबलेयेन बाहुलेयस्य सादृश्यमिति शक्यत एव। सत्यं वक्तुं शक्यत एव। केवलं वस्तुशून्यं तु तत् शाबलेयबाहुलेययोः स्वरूपेणात्यन्तविलक्षणत्वात्। तदेतदाह—

**न ताव[illegible] ॥६७॥**

**विशेषरूपतः ।**

इति । ननु मा भूत् स्वरूपेण सादृश्यम् । अवयवसंस्थानादिसामान्ययोगेन किमिति न भवति । न तावदेतदपि सर्वत्रास्यस्ति केषां चिदत्यन्तविलक्षणावयवसंस्थानादिमत्त्वादिति । अपि च यत्रापि तदस्ति तत्रापि—स इव—इति सादृश्यानबन्धना प्रतीतिः स्यात् । न पुनः—स एव—इति । तदेतदाह—

**येऽपि तत्संस्थानादिभिः समाः ।**
**शाबलेय इवेति स्यात्तत्र बुद्धिर्न गौरिति ॥६८॥**

इति । ननु शाबलेयसारूप्यमेव गोत्वं नापरं किञ्चित् । अतश्च तस्येदमस्ति—गौः—इति कथं न स्यात् । उच्यते—यद्येवम् न तर्हि—शाबलेयो बाहुलेयसदृशः—इति गोबुद्ध्या न गृहीतः स्यात् । तदाह—

**शाबलेयोऽयमिति वा भ्रान्त्या गौरिति नास्ति धीः ।**
**शाबलेयस्वरूपं तु न गौरित्यवतिष्ठते ॥६९॥**

इति।न केवलं तत्र न स्यात् तद्विलक्षणेष्वपि बाहुलेयादिषु कथं भविष्यति । न च—मा भवतु । का नाम क्षतिः—इति वक्तुं शक्यं दृश्यमानत्वात् । न च विलक्षणेष्वेवास्मदभिप्रेतमिव ते गोरूपं सामान्यमस्ति । अतः शाबलेयविलक्षणेषु गोबुद्धिर्निरालम्बनैव ते प्राप्नोति । तदेतत् सर्वमाह—

**तदन्येषु हि गोबुद्धिर्न स्यादसदृशेष्वपि ।**
**दृश्यते सापि नान्यत्ते गोरूपं तत्र विद्यते ॥७०॥**

इति । न चाप्यनादौ संसारे सत्येवमपि वक्तुं शक्यम्—प्रथममेको गौरुत्पन्नः । तत्सादृश्यादद्यतनाः सर्वे शाबलेयादयो—गौः—इत्युच्यन्ते—इति । तदेतदाह—

**न चान्यो गौः प्रसिद्धोऽस्ति यत्सादृश्येन गौर्भवेत् ।**

इति । किञ्च भवतु नामाभावेको गौः । तत्सादृश्येन तु शाबलेयादिषु प्रतीयमानेषु—स इव—इति स्यात् । न—स एव—इति । भ्रान्तिरिति चेत् कथमबाधितरूपः सर्वजनीनः प्रत्ययो भ्रान्तिः । तदाह—

**न चापि स इति ज्ञानं सदृशेष्वस्ति सर्वदा ॥७१॥**
**सर्वपुंसामतो भ्रान्तिर्नैषा बाधकवर्जनात् ।**

इति । यदि चासत्यपि बाधकप्रत्यये मिथ्यात्वमित्युच्यते ततः किमनेन सामान्यापलापमात्रेण । सर्वविज्ञानमिथ्यात्वमेव वरं तत्र चोक्तमित्यभिप्रायेणाह—

**सर्वज्ञानानि मिथ्या च प्रसज्यन्तेऽत्र कल्पने ॥७२॥**

इति । यश्चाभावेको गौर्भवता कल्पितः यत्सादृश्येन शाबलेयादयो—गौः—इत्युच्यन्ते सोऽपि तावन्निरूपणीयः । समानाकारेष्वविशेषेण सर्वेषु शाबलेयादिषु प्रतीयमानेषु कोऽसौ मुख्यो यत्सादृश्यादन्ये तदाकारतया गृह्यन्ते इति । तदेतदाह—

**विशेषग्रहणाभावादेको गौः कश्च कल्प्यताम् ।**

इति । यदि तु—यः प्रजापतिना सृष्टः स गौः । तत्सादृश्यादन्ये गौरित्युच्यन्ते—इति तथाप्यस्मदादीनामप्रतिपन्नतद्रूपाणां शाबलेयादिषु तत्सादृश्यप्रत्ययो नास्ति । अतश्च तन्निबन्धना गोबुद्धिः कथमस्त्वित्याह—

**बभूव यद्यसौ पूर्वमस्मदादेस्तदग्रहात् ॥७३॥**
**सादृश्यावधृतिर्नास्तीत्यतो गोधीर्न लभ्यते ।**

इति । किञ्च सर्वसामान्यापह्नवे सादृश्यमपि कथं तदवयवसामान्याश्रयमित्युक्तम् । तदाह—

**न चावयवसामान्यैर्विना सादृश्यकल्पना ॥७४॥**

इति । न चावयवविशेषाः सामान्यप्रत्ययहेतवो भविष्यन्ति । अतश्च सादृश्यमपि भविष्यतीति वाच्यम् । विशेषाणां सामान्यबुद्धिजननासामर्थ्यात् इत्युक्तं प्राक् । तदेतदाह—

सामान्य... न विशेषेण ...ते ।

इति । किञ्च इदं ...

ततः सर्वस्वलक्षणानुगतमेकमस्तीत्यभ्युपगतम् । अतश्च नामान्तरेण सामान्यमेव तत् प्राप्तम् । अथाव्यतिरिक्तं पुनरपि व्यक्तिमात्रप्रतीतिरित्याह—

व्यक्तितश्चातिरेकोऽस्य स्यान्न वेति विचारिते ॥७५॥
सामान्यमेव सादृश्यं भवेद्वा व्यक्तिमात्रकम् ।

इति । किञ्च विन्ध्यवासिनोऽपि—पिण्डसारूप्यं सामान्यम्—इति वदतो नायमभिप्रायः—सादृश्यरूपं सामान्यम्—इति । किन्तु पिण्डरूपमेव सामान्यं न पिण्डव्यतिरिक्तम्—इत्यभिप्रायः । भ्रान्तैस्तु तदीयग्रन्थाभिप्रायमजानानैरन्यादृशमेव तद्व्याख्यातं इत्याह—

तेन नात्यन्तभिन्नोऽर्थः सारूप्यमिति वर्णितम् ।
ग्रन्थे विन्ध्यनिवासेन भ्रान्तः सादृश्यमुच्यते ॥७६॥

इति भट्टपुत्रजयमिश्रविरचितायां श्लोकवार्तिकव्याख्यायां शर्कारिकायां आकृतिग्रन्थे प्रथमः परिच्छेदः

# अथापोहवादस्थानकम्

अत्र बौद्धाः प्राहुः—न तावदिदं सामान्यज्ञानमगृहीतस्वलक्षणस्य जायते। तेनावश्यं प्रथमनिर्विकल्पकेनैव स्वलक्षणं ग्रहीतव्यम्। तच्च निर्भागं भागहीनं नागृहीतं किंचिदस्ति। अतः समस्तमेव गृहीतम्। गृहीते च पुनः सविकल्पकेन किमपरं ग्रहीतव्यम्। तद्धि तत्र विधिमुखेन प्रवर्तमानमभ्यधिकव्यापाराभावादनर्थकमेव स्यात्। अतो भ्रान्त्या तदन्यारोपव्यवच्छेदः शब्दानुमानाभ्यां क्रियते। यथा निर्विकल्पकगृहीतं शुक्तिकादिकं द्रव्यं भ्रान्त्या रजतमित्यारोप्य पश्चात्—नेदं रजतम्—इति तद्व्यवच्छेदेन प्रतिपद्यते तथेहापि प्रतिपन्नगोस्वलक्षणोऽपि भ्रान्त्या तदन्याध्यवसायात् तत्साध्यार्थक्रियाया न प्रवर्तते। यदा तु तद्व्यवच्छेदो भवति—अगौर्न भवति—इति तदा प्रवर्तते। अतोऽपोहविषयः शब्दो लिङ्गं चेत्युक्तम्। तथाहुः—

> एकस्यार्थस्वरूपस्य प्रत्यक्षस्य सतः स्वयम्।
> कोऽन्यो न दृष्टो भागः स्याद्यः प्रमाणैः परीक्ष्यते॥
>
> नो चेत् प्रतिनिमित्तेन संयुज्येत गुणान्तरम्।
> शुक्तौ वा रजताकारो रूपसामान्यदर्शनात्॥
>
> तस्माद्दृष्टस्य भावस्य दृष्ट एवाखिलो गुणः।
> भ्रान्तैर्निश्चीयते नेति साधनं संप्रवर्तते॥ इति।

ननु भवतु यत्र प्रतिपन्नस्वलक्षणस्य—अगौरयम्—इति प्रतीतिरुदेति। पश्चात्—नायमगौः—इति प्रत्ययः तत्रान्यापोहः। यत्र तु पुरस्तादन्याध्यारोपो नास्त्येव तत्र तद्व्यवच्छेदाभिधानं प्रलापः। सत्यम्। एवमेतत्। ईदृश एवायं प्रत्ययः—गौः—इति। केवलं पूर्वप्रमाणादभ्यधिकमस्य फलं पश्यन्तः—फलतोऽपोहः शब्दलिङ्गावसेयः—इति वदामः न प्रतिपत्तितः। यथाहुः—व्यवहर्तारः खल्वेवं विवेचयन्ति न प्रतिपत्तारः—इति। निश्चयारोपितयोश्च बाध्यबाधकभावान्निश्चये सति नानिश्चयो भवतीति बाध्यते इत्युक्तम्।

किञ्च यदा सामान्यं वस्तुरूपव्यतिरेकाव्यतिरेकविकल्पेन न बुध्यते तदा तदाकारेण स्वलक्षणं ग्रहीतुमशक्यमित्यवश्यं यथाविधं तत् तथाविधोऽयं सामान्यप्रत्यय इत्यभ्युपगन्तव्यम्। तच्च समस्तेभ्यो · भ्यो

व्यवच्छिन्नं नान्यगतिन्यावच्छेदनिबन्धनाः सामान्यप्रत्ययाः । तेन द्रव्यव्यवच्छेद

यद्रूपं शाबलेयस्य बाहुलेयस्य नास्ति तत् ।
अतद्रूपपरा वृत्तिर्द्वयोरपि न भिद्यते ॥
तस्माद्यः पदार्थानां व्यावृत्तिस्तन्निबन्धनाः ।
वस्तुभेदाः प्रकल्प्यन्ते तद्विशेषावगाहिनः ॥ इति ।

इतश्च कारणाद्व्यवच्छेदविषयाः सामान्यप्रत्ययाः । तथा हि—यदि ते वस्तुरूपग्राहकाः तत् केनचिदेकेन गवादिना रूपेण तद्वस्तु गृहीतमिति सर्वात्मकग्रहणप्रसङ्गादपरबुद्धीनामपरशब्दानां च पर्यायत्वं प्राप्नोति । अस्मत्पक्षे तु व्यवच्छेदस्यावस्तुरूपत्वाद्वस्तुसंस्पर्शनिबन्धना दोषा न संभवन्तीति । तदुक्तम्—

अन्यथैकेन शब्देन व्याप्त एकत्र वस्तुनि ।
बुद्ध्या वानन्यविषय इति पर्यायता भवेत् ॥ इति ।

नन्वेवमपि व्यवच्छेदनिबन्धनत्वात् सामान्यप्रत्ययस्य व्यवच्छेदस्य चावस्तुत्वान्न ततो वस्तुप्रतिलम्भः स्यात् । उच्यते—नायं वस्तुप्रतिभासनिबन्धनो वस्तुलाभः । किं तर्हि । वस्तुप्रतिभासपूर्वकत्वात् सामान्यप्रत्ययस्य पारम्पर्येणास्ति तत्प्रतिबन्धलाभ इत्यदोषः ।

नन्वेवमपि तस्य स्वलक्षणज्ञानस्य सर्वसामान्यप्रत्ययकारणस्य किंनिबन्धनो गवादिसामान्ये विशेषप्रत्ययः स्यात् । उच्यते—यस्यापि वस्तुरूपं सामान्यमस्ति तस्याप्यनेकसामान्यसंनिधौ किंनिबन्धनो विशेषप्रत्ययो भवेत् । तत्रैवमुच्यते—यदि यत्र गृहीतं जिघृक्षितं यद्वाचकशब्दस्मरणं च भवति तदेव ह्येतेन नान्यत्—इति तदस्मत्पक्षेऽपि समानम् । अस्माकमपि प्रत्यक्षगृहीते स्वलक्षणे यदर्थक्रियाकारिविशेषजिघृक्षा यद्वाचकस्मरणं वा भवति तद्रूपप्रत्यय एव भवति नान्यरूप इति । तदुक्तम्—

प्रत्यक्षेण गृहीतेऽर्थे विशेषे च जिघृक्षिते ।
यद्विशेषावसायोऽस्ति प्रत्ययः स प्रतीयते ॥ इति ।

नन्वेवमपि यतः कुतश्चित् सामान्यप्रत्ययः स्यात् । उच्यते—यस्यापि स्वलक्षणाभिव्यक्तं सामान्यं गृह्यते तस्यापि किमिति येन केनचित् स्वलक्षणेन यत्किञ्चित् सामान्यं नाभिव्यज्यते । अथ यदि तत्रैवमुच्यते—

स्वलक्षणानां भेदेऽपि किञ्चिदेव स्वलक्षणम् ।
किञ्चिदेव तु सामान्यं व्यनक्ति—इति ।

तदस्मत्पक्षेऽपि समानम् । स्वलक्षणज्ञानानां भेदाविशेषेऽपि किञ्चिदेव तद्विज्ञानं किञ्चित् सामान्याकारं विज्ञानं जनयति नान्यदिति । यथोक्तम्—

ज्वरादिशमने काश्चित् सह प्रत्येकमेव वा ।
दृष्टाश्चौषधयः शक्ता नानात्वेऽपि न चापराः ॥ इति ।

कथमिदानीमवस्तुग्राहिणि सामान्यप्रत्यये इदं ज्ञायते इदं पारम्पर्येण वस्तुप्रभवं इदं नेति । उच्यते—यस्यापि वस्तुग्राहकं विज्ञानं तस्यापि कथं निश्चयः । यथा विनापि तेन तदाकारप्रत्ययः शुक्तिकारजतज्ञानादिषु दृष्ट एव । अथ—तत्र बाधकप्रत्ययेन मिथ्यात्वग्रहणादसत्यत्वम् । अबाधितरूपे तु सत्यत्वमिति विवेको दृश्यते—इति । तदस्मत्पक्षेऽपि यत्र—न—इति प्रत्ययोऽनन्तरं न भवति तत्र पारम्पर्येण प्रतिबन्धोऽस्ति । यत्र तु भवति तत्र नेति गम्यते । यथोक्तमस्माभिर्बाह्यार्थसिद्धौ—

यथाविधं घटं दृष्ट्वा द्वैतवादी स चेष्टते ।
ज्ञात्वा तथाविधं ज्ञानमद्वैती किं न चेष्टते ॥ इति ।

तस्मादयमपि न दोषः । एतेन शब्दापोहो व्याख्यातः । तदेवं सर्वत्र स्वलक्षणाध्यवसायिनश्चान्यापोहविषया एव ज्ञानप्रत्ययाः पचेत्यादिशब्दजनिताश्च साध्यादिप्रत्यया अपोहविषया द्रष्टव्याः । ग्रन्थविस्तरभयान्न प्रतन्यते ।

इत्यन्यापोहशब्दार्थौ कल्पितौ शाक्यभिक्षुणा ।
गतानुगतिकैरन्यैः कष्टं तावदनुवर्तितौ ॥
तस्मादत्यन्ततुच्छस्याप्यस्य पक्षस्य दूषणम् ।
उच्यते तत्र यत्तावदिदमेवमुदीरितम् ॥

एकोऽर्थात्मा निर्भागो निर्विकल्पकप्रत्यक्षप्रतिपन्नः—इति तदयुक्तम् । एकानेकरूपस्तु—इति तत्र तत्र साधितं यतः ।

यच्च—प्रतिपन्नस्य पुनः किं प्रमाणेन प्रतिपत्तव्यम्—इति तदप्ययुक्तम् । देशकालादिभेदेन प्रमाणान्तरं सावकाशमस्त्येतदपि साधितमेव यतः । अनेन च वस्तुनोऽनेकरूपत्वप्रतिपादनेनातत्कारिव्यवच्छेदविषयत्वमपि प्रत्युक्तम् ।

अनेकरूपत्वात् [illegible] ऽपि दर्शितः । पर्या-

यत्वं च बुद्धि [illegible]

म्पर्येण तदवाप्तिरिति वक्तव्यम् । नापि वासनाविशेषानवच्छिन्नस्वलक्षणज्ञान-
नियतश्च सामान्यविशेषप्रत्यययोः परप्रतिबन्धकरणमात्रेण परिकल्पनीयः । न
च मिथ्याज्ञानानामेवावान्तरविभागाश्रयणे तद्वस्तुलाभो वक्तव्यः । ततश्च
यदेव प्रतिभाति तदेव वस्तुनो रूपम् । तच्चागोनिवृत्तिशब्देनाभिमतं न च
काचित् क्षतिः न नाम वार्यते यतः । तदेतत् सर्वं मनसि कृत्वा वार्तिककारे-
णोक्तम्—

अगोनिवृत्तिः सामान्यं वाच्यं यैः परिकल्पितम् ।
गोत्वं वस्त्वेव तैरुक्तमगोऽपोहगिरा स्फुटम् ॥१॥

इति । इदानीं भवतु नामेदं विज्ञानं व्यवच्छेदविषयम् । तथापि स्वत-
न्त्रस्याभावस्य ग्रहणाभावादवश्यं भावाश्रित एव ग्रहीतव्यः । स चायमभावोऽ
भावान्तरात्मकः प्रतिपादितः—न स्वतन्त्राभावबुद्धिरुदेति—इति । तदेतदाह—

भावान्तरमभावो हि पुरस्तात् प्रतिपादितः ।
तत्राश्वादिनिवृत्त्यात्मा भावः क इति कथ्यताम् ॥२॥

इति । तत्र यद्यपरोऽयं स्वलक्षणमस्याश्रयत्वेन कल्प्यते युक्तं अवि-
कल्प्यत्वात् तस्य । कथं सविकल्पकविज्ञानविषयत्वं तदाह—

नेष्टोऽसाधारणस्तावद्विषयो निर्विकल्पनात् ।

इति । यदि तु सविकल्पकविषयमेवावान्तरसामान्यं शाबलेयत्वं बाहुले-
यत्वं वोच्यते ततोऽगोव्यावृत्त्यात्मके तस्मिन् गृहीते नापरस्य तद्रूपत्वमिति
न तत्र गोप्रत्ययः स्यात् । तदाह—

तथा न शाबलेयादेरसामान्यप्रसङ्गतः ॥३॥

इति । एवं हीदं सर्वत्र सामान्यज्ञानं स्यात् यदि तदात्मकं शाबलेयादि
सर्वगतं स्यात् । यदि वा तदेवागोव्यावृत्त्यात्मकं सर्वत्रानुगतं भवेत् । न चैतदु-

भयमप्यस्ति। अतश्च गोशब्दोऽपोहविषयः सङ्केतमभिमतं वाच्यमलभमानो नन्वर्थ एव स्यात्। तदाह—

**शाबलेयादिरूपं हि न सामान्यं परस्परम्।**
**न चैकमितरेषां वस्तत्रानन्तार्थता भवेत्॥४॥**

इति। किञ्च इतश्च कारणादगोव्यावृत्त्या शाबलेयादि ग्रहीतुं न शक्यते यन्नासावात्मीयेन शाबलेयत्वादिना विशेषरूपेणागोरूपानश्वानपोहते। अपि तु गोरूपेण। न च ते तद्व्यतिरिक्तमित्यतश्चागोव्यावृत्त्या शाबलेयादि ग्रहीतव्यं त्वन्मते न स्यात्। न चैतद्युक्तियुक्तमित्याह—

**न च साक्षाद्विशेषस्य तेऽपोह्या इति युक्तिमत्।**
**न शाबलेयविज्ञानमगोव्यावृत्तिबन्धनम्॥५॥**

इति। यदि चागोव्यावृत्त्या शाबलेयो गृह्यत ततस्तयोः पर्यायत्वाद्यथा शाबलेयशब्दाद्बाहुलेयव्यावृत्तिः प्रतीयते तथा गोशब्दादपि तद्व्यावृत्तिप्रतीतिः स्यात्। यदि वा यथा गोशब्दादश्वादिनिवृत्तिमात्रं प्रतीयते तथा शाबलेय-शब्दादपि तन्मात्रापोहप्रतीतिरेव स्यात्। न बाहुलेयापोहप्रतीतिः—इत्यभि-प्रायेणाह—

**निवृत्त्या बाहुलेयादेस्तद्विज्ञानं प्रवर्तते।**
**कुर्यादगोनिवृत्तिं चेन्नापोहेतात्मवद्धि तान्॥६॥**

इति। यदि तु—गोरूपेण नापोहते शाबलेयरूपेण त्वपोहते—इत्युच्यते अभिन्नरूपयोर्द्वयोरप्यनयोः कथं केनचिदाक्षेपः केनचिच्च प्रतिक्षेपः। विरुद्ध-मेवेदम्—आक्षिपति प्रतिक्षिपति च—इति। तदेतदाह—

**तेनांशेनानपोहश्च स्वरूपेणाप्यपोहनम्।**
**कल्प्यते चेद्विरोधः स्यात् कथमाक्षेपवारणम्॥७॥**

इति। अंशवाचोयुक्तिश्चात्र स्वमतेन द्रष्टव्या। न तु पर्यायत्वापादनेन तेषामंशांशिभावोऽस्ति। तस्मादयमपि न दोषः।

एवं तावत् स्वलक्षणाश्रय[illegible] व्यावृत्तिर्ग्रहीतुं न शक्येत्युपसंहरन्नाह—

**तस्मात् प्रत्यात्मकै रूपैरगोऽपोहो न युज्यते ।**

इति । यदि तु शाबलेयादिस्वलक्षणसमुदाय एवागोव्यावृत्त्याश्रया भण्यते ततः समस्तसमुदायप्रतीतौ भूतायामगोव्यावृत्तिप्रतीतिः सर्वसमुदायानुषाङ्गिणा स्यात् । न तु प्रतिपिण्डं कृत्स्नसमवायिना । तदेतत् सपादेन श्लोकेनाह—

**समुदायोऽपि नैतेषामगोव्यावृत्तिसंमतः ॥८॥**
**सर्वोपलब्धौ तद्बुद्धिर्व्यासज्यैव प्रसज्यते ।**
**न प्रत्येकं भवेदेषा**

इति । समस्तसमुदायाश्रयणे चायमपरो दोषः येनासौ प्रत्येतुमपि न शक्यते । कथं तदाश्रयागोव्यावृत्तिप्रतीतिः । तदाह—

**न समस्तेष्वशक्तितः ॥९॥**

इति । तदिदं भावरूपमभावरूपं वा प्रतिपिण्डं कृत्स्नसमवायि वस्तु गृह्णाति बुद्धिरुत्पद्यमानैव मे घटते । यदि तथाविधमेव तद्वस्त्वित्यङ्गीक्रियते तच्च तथाङ्गीकृतं गोत्वरूपमेवास्मदभिमतं प्राप्तमित्याह—

**तस्मात् सर्वेषु यद्रूपं प्रत्येकं परिनिष्ठितम् ।**
**गोबुद्धिस्तन्निमित्ता स्याद्गोत्वादन्यच्च नास्ति तत् ॥१०॥**

इति । अत्रेदानीं—नावश्यमेकाकारप्रत्ययः सर्वत्रैकवस्त्वालम्बन एव भवति विनापि तेन स्वतन्त्रस्य क्वचिद्दर्शनात् । एवमिहाप्यगोव्यावृत्तिप्रत्ययः किमिति नेष्यते—इति मन्यमानश्चोदयति—

**ननु च प्रागभावादौ सामान्यं वस्तु नेष्यते ।**

इति । सिद्धान्तवादी तु—अस्त्येवात्रापि क्षीरादिसत्ता दध्यभावादिविशिष्टैकरूपा । तदालम्बनमिदम्—इत्याह—

**सत्तैव ह्यत्र सामान्यमनुत्पत्त्यादिरूपिता ॥११॥**

इति। ननु यदि प्रागभावादिरूपेण सत्ता गृह्यते हन्त तर्हि किंनिबन्धनः सदसद्विवेकप्रत्यय इत्याशङ्क्य विवेकं दर्शयति—

**तामुत्पत्त्याद्यनुस्यूतां सत्तेति प्रतिजानते।**
**अन्यापोहानुविद्धा तु सैवाभावः प्रतीयते ॥१२॥**

इति। स्वरूपेण हि सत्तोच्यते अन्याभावधर्मत्वेन प्रागभावादिरूपेणेत्यस्ति विवेक इत्यर्थः।

नन्विह तर्हि यथैकेन सामान्येन विनालम्बनेन विलक्षणेष्वपि घटादिषु—अनित्यः अनित्यः—इत्येकाकारो नित्यत्वव्यतिरेकमात्रग्राही प्रत्ययो भवति। तथापि किमित्यगोव्यावृत्तिप्रत्ययो न भवति। इत्याशङ्क्यानित्येऽप्येकं सामान्यं बुद्धिग्राह्यं दर्शयति—

**अनित्यत्वं विनाशाख्यक्रियासामान्यमुच्यते।**

इति। एकरूपविनाशाख्यक्रियादर्शनेन ह्यत्रानित्यत्वप्रत्ययः न नित्यत्वव्यवच्छेदमात्रेणेत्यर्थः। इह तर्हि कथम्—अब्राह्मणः अब्राह्मणः—इति विलक्षणेषु क्षत्रियादिष्वेकेन विनालम्बनेन विनैकाकारप्रत्यय इति पृच्छति—

**अब्राह्मणत्वं किं नु स्याद्भिन्नेषु क्षत्रियादिषु ॥१३॥**

इति। नचास्य पुंस्त्वमालम्बनमिति वक्तुं शक्यं तस्य चतुर्वर्णाधारत्वात्। न च विशेषः सामान्याकारत्वात्। तदेतदाह—

**पुरुषत्वं चतुस्संख्यं विशेषेषु च नास्ति धीः।**

इति। विशेषानालम्बनत्वमेव प्रतीतिकथनेन प्रपञ्चयन्नाह—

**सामान्यप्रत्ययश्चैषु प्रत्येकमुपजायते ॥१४॥**

इति। अतश्च स्वतन्त्रमेवेदं ब्राह्मणत्वाभावरूपं सामान्यं तत्रेत्यङ्गीकर्तव्यमित्याह—

**तेनात्र** [illegible] ।

इति । ततश्च यथा [illegible] व्यवच्छेदमात्रमेव गोत्वादिसामान्यं भविष्यतीति शङ्कते योजयन्नाह —

**गोत्वादावपि तेनैवं सामान्यप्रत्ययो भवेत् ॥ १५ ॥**

इति । अत्र समाधिः—

**कैश्चित्तत्रैकशब्दत्वमक्षादिष्विव कल्पितम् ।**
**जातित्रयस्य**

इति । अयमभिप्रायस्तेषाम्—न ह्यत्र क्षत्रियादिष्वेकाकारोऽयं प्रत्ययः । अपि तु प्रत्येकालम्बनोऽयमक्षादिष्विव । अतो न तदेवैकरूपं सामान्यत्रयमस्यालम्बनमिति नानालम्बनत्वम् । नापि निरालम्बनत्वमिति । न पुनरयं व्यापकः परिहारः । न ह्ययमघटादिषु संभवति । तदाह—

**नैवं तु संभवत्यघटादिषु ॥ १६ ॥**

इति । कथं न संभवतीत्याह—

**नात्र ह्यनन्तकभेदे साधारण्यं निरूप्यते ।**
**तस्मात् क्रियागुणाः काश्चिद्वेतव्योऽनन्यवातनः ॥ १७ ॥**

इति । वृक्षादयो ह्यनन्ता [illegible] न तत्र साधारणशब्दता शक्याध्यवसातुं संबन्धग्रहणाभावात् । अतोऽवश्यं किञ्चिदेकरूपं सामान्यमेवाङ्गीकर्तव्यम् । यावत्तन्न [illegible] तावन्निरालम्बनैकाकारा बुद्धिर्भवेत् । अतश्च तदेव वाच्यमित्यर्थः । तदिदानीमेकरूपं सामान्यं क्षत्रियादिषु त्रिष्वप्यनुगतं ब्राह्मणेभ्यो व्यावृत्तं किञ्चित्प्रतिग्राहकत्वमन्यद्वा कर्मान्वेषणीयं सामान्यप्रत्ययस्य हेतुभूतमित्यर्थः ।

परिहारान्तरमाह—

**पुरुषत्वं नञा चैतद्ब्राह्मणेभ्यो निवर्तितम् ।**
**चातुर्वर्ण्यप्रसक्तं सद्गम्यतेऽर्थादिभिर्यथा ॥ १८ ॥**

इति । तदेव पुरुषत्वं क्षत्रियादिवर्णत्रयाधारमवगम्यते इत्यर्थः ।

ततश्च यद्यपि त्रिष्वेकं किञ्चिदनुगतं सामान्यं नास्ति तथापि शब्दसामर्थ्यात् पुरुषत्वमेव त्र्याधारमालम्बनमस्य प्रत्ययस्य जातमिति न निरालम्बनता नाप्यनन्तालम्बनतेत्याह—

यद्यप्यवान्तरा नास्ति त्रिषु जातिर्व्यवस्थिता।
नञ्सामर्थ्यान्नरत्वं तु त्र्याधारं संप्रतीयते ॥१९॥

इति। ततश्च त्र्याधारे चतुराधारे वा पुंस्त्वे शब्दसामर्थ्यवशात् पर्युदासतोऽब्राह्मणशब्दात् स्वरूपतश्च पुंशब्दाद्वर्णेषु त्रिपु चतुर्पु वा प्रत्ययभेदो भवतीत्याह—

शब्दसामर्थ्यभेदेन वर्णेषु मतिभिन्नता।
पुंस्त्वे त्रिचतुराधारे पर्युदासस्वरूपतः ॥२०॥

इति। न चैवं वक्तव्यम्—कथमब्राह्मणशब्दः साधारणं पुस्त्वं प्रतिपादयितुं समर्थः—इति। किं तत्रापरं पर्यनुयोज्यम्। तदेतदाह—

दूरान्तिकेक्षणे शक्तिर्गृध्रवायसचक्षुषोः।
यथा रूपे तथा पुंस्त्वे पुमब्राह्मणशब्दयोः ॥२१॥

इति। विविधशक्तीनि च पदानि। कानिचित् पदान्तरार्थे प्रवर्तन्ते कानिचिद्वाक्यान्तरार्थे। तेन यत्रेदृशं वाक्यं प्रवर्तेत—ब्राह्मणव्यतिरिक्तक्षत्रियादिवर्णत्रयाधारं पुंस्त्वम्—इति प्रतिपत्तिर्वा यत्र इति तत्राब्राह्मणपदं तज्जनिता च बुद्धिरिति द्रष्टव्यम्। तदेतदाह—

ब्राह्मणव्यतिरिक्तार्थवृत्ति पुंस्त्वमितीदृशम्।
वाक्यं यत्र प्रवर्तेत तत्राब्राह्मणधीपदे ॥२२॥

इति। व्यापकश्चायं परिहारः। तथा हि—अघटादिष्वपि घटत्वादिवर्जितसर्ववृक्षाद्यनुगतं पार्थिवत्वादिसामान्यमनेनैव न्यायेन शक्यमेव प्रतिपादयितुमित्याह—

पार्थिवत्वादिसामान्यमेवमेवाघटादिषु ।

घटत्वादि।वः

इति । तदेवं तावच्छब्दसामर्थ्यबलमाश्रित्योक्तम् । इदानीमवयवार्थपर्यालोचनयाप्ययमेवार्थः प्रतीयते इति दर्शयन्नाह—

असाधारणभावाच्च नञा शब्दो विशेषितः ।

इति । अस्यार्थः—ब्राह्मणशब्दाद्धि बहवोऽर्थाः शब्दवाच्या अर्थप्राप्ताश्च प्रतीयन्ते । तत्र नञा प्रतिषिध्यमानो मुख्य एव प्रतिषिध्यते येनासौ ब्राह्मणशब्दस्यासाधारणो वाच्यः । तेन तदभिधायैव नञा विशेषितस्तद्विरहितं यत्परमर्थप्राप्तं तदनिषिद्धं बोधयत्येवेति सिद्धम्—ब्राह्मणत्वमात्रं प्रतीयते—इति । तदुक्तम्—

तावन्मात्रेण रहिते सामान्ये व्यवतिष्ठते ॥२४॥

इति । नन्वेवमपि प्रतिषिद्धे ब्राह्मणत्वेऽर्थप्राप्तं प्रतीयमानं किमिति पुस्त्वमेव प्रतीयते न पुनः सत्त्वज्ञेयत्वादिरपि । किमिति वा तदभावमात्रप्रतीतिरेव न भवति । अतोऽवगच्छामः—विकल्पमात्रमेवेदम् । नात्र वस्तु किञ्चिदस्ति—इतीत्याशङ्क्य परिहरति—

विशेषे प्रतिषिद्धे च सामान्यं यदनन्तरम् ।
सामान्याकाङ्क्षिणं शब्दं निरुणद्धि तदात्मनि ॥२५॥

इति । अयमभिप्रायः—ब्राह्मणत्वं ह्यवान्तरपुरुषत्वसामान्यविशेषः । अतश्च तस्मिन्निषिद्धे तदविनाभावि पुरुषत्वं प्रतीयते न व्यभिचारि वृक्षत्वम् । नापि सर्वसाधारणं सत्तादि । तच्च प्रतिपन्नमिदानीमब्राह्मणशब्दात्—अब्राह्मणमानय—इत्यादिक्रियायोगापादितकर्मभावं कर्मभूतसामान्यान्तरापेक्षमात्मन्येव निवेशयति । अतो न सत्तादिप्रतीतिः नाप्यभावप्रतीतिः—इति ।

इतश्च कारणात् ब्राह्मणत्वादिरहितं पुंस्त्वमेव प्रतीयते नान्यत् येन ब्राह्मणपदात् ब्राह्मणपुरुषावेव श्रुत्यर्थाभ्यां प्रथमं प्रतिपन्नौ । न वृक्षत्वादि ।

नापि सत्तादि । न च मुख्यं ब्राह्मणत्वमेव प्रतिपन्नम् । अतश्चासाधारणतया नञा तद्विशेष्यमाणं परित्यज्य ब्राह्मणत्वमर्थप्रतिपन्नं नरत्वमपि किं त्यजेत् । तस्माद्युक्तं यद्ब्राह्मणत्वरहितं नरत्वमेवास्य वाच्यमिति । तदेतदाह—

प्रथमातिक्रमे चास्य कारणं नैव विद्यते ।
ब्राह्मणत्वादतोऽपेतं नरत्वमवतिष्ठते ॥२६॥

इति । एवमसाधारण्यान्नञ् तावद्ब्राह्मणत्वनिषेधेन चरितार्थीभूतः । अर्थप्राप्तं च नरत्वं प्रतीयते । ततश्च यदि—तदपि न प्रतीयते—इत्युच्यते तदा अश्रुतमेव कल्पितं स्यादित्याह—

व्युदस्य ब्राह्मणत्वं च नञि जाते विशेषणे ।
नरत्वोद्गमनं यत्तु कल्प्येताश्रुतमेव तत् ॥२७॥

इति । तेनैतावदेवात्र नञ्विशेषणफलं द्रष्टव्यम् । यस्य सामान्यस्य नरत्वादेर्ये विशेषा ब्राह्मणत्वादयो निषिध्यन्ते तद्विवर्जितं नरत्वादिसामान्यं प्रतीयमानमर्थादन्यविशेषगतमेव प्रत्येतव्यम् । लोकेऽपि चैवमेवाब्राह्मणपदेऽन्यप्रतीतिर्दृश्यते । तदेतदुपसंहरन्नाह—

तस्माद्यस्यैव ते भेदा निषिध्येरंस्तदर्थतः ।
भेदान्तरस्थं सामान्यं लोकेऽप्येवं प्रतीयते ॥२८॥

इति । किञ्च यदा ब्राह्मणत्वरहितं पुरुषत्वमब्राह्मणपदात् प्रतिपन्नं तदा यद्यपि तच्चतुर्वर्णविषयं प्रतिभाति तथापि ब्राह्मणत्वरहितत्वपर्यालोचनयार्थात् साधारणमेव भविष्यतीत्याह—

प्रसङ्गिन्यां च तद्बुद्धौ निषेधोऽर्थादपीष्यते ।

इति । यदि वा चत्वारोऽपि वर्णाः परस्परमेकरूपप्रत्यया ब्राह्मणत्वादिभिरेवावान्तरसामान्यैर्भिद्यन्ते । तत्र यदा नञा तदपास्तं वस्त्वपेक्ष्यते तदा तुल्यरूपतया वर्णत्रयमेवात्रावतिष्ठमानं प्रतीयते इत्याह—

**तन्मात्र-**

इति । यदि वा सादृश्यमात्रवचन एव [illegible] प्रयोगदर्शनात् । अतश्च—अब्राह्मणा इति कोऽर्थः । ब्राह्मणसदृशाः—इति । तत्सदृशाश्च त्रयोऽपि वर्णाः क्षत्रियादय इति त एव ततः प्रतीयन्त इत्याह—

**सादृश्यमेव वा वाच्यमिष्टमब्राह्मणादिषु ।**

इति । प्रायश्च सादृश्यमवयवसामान्यबाहुल्ययोगेन दृष्टम् । इह तु तेन विनावान्तरसामान्येन पुरुषत्वादिना तल्लक्षणीयमित्याह—

**तच्चावयवसामान्यादृतेऽप्येतेन लक्ष्यते ॥३०॥**

इति । ननु युक्तं यत्र सादृश्यमवगम्यते । यत्र तु तन्नास्ति तत्र किंनिबन्धनो विशिष्टार्थप्रत्ययः । यथा—नोद्यन्तमादित्यमीक्षेत—इत्येवमादिषु सङ्कल्पादिप्रतीतिरित्याशङ्क्याह—

**क्वचिद्विनापि सादृश्यात् साहचर्यादिहेतुका ।**
**नञ्युक्तशब्दवृत्तिः स्यात् यथा वक्ष्यत्यनीक्षणे ॥३१॥**

इति । ईक्षणमूलभूतो हि तत्र सङ्कल्पोऽस्ति । अतश्च तस्मिन्निषिद्धे स एवानन्तरं बुद्धिस्थो गृह्यते इत्यर्थः ।

न हीक्षणप्रतिषेधे कृते तदभावमात्रप्रतीत्यैव भवितव्यम् । कथं तत्सहचरितसङ्कल्पप्रत्ययः शब्दे एवारोप्यते । तदुच्यते—स्यादेवं यद्ययमीक्षणप्रतिषेधः स्यात् । अनीक्षणविधिस्त्वयम् । अतश्चेक्षणव्यतिरिक्तं किमपि कर्म कर्तव्यमित्यस्यामपेक्षायां साहचर्योपस्थितः सङ्कल्पो नातिक्रमितुं शक्यते । तदेतदाह—

**ईक्षणव्यतिरिक्ता हि क्रिया तत्राप्यपेक्षिता ।**
**प्रत्यासत्तेर्न सङ्कल्पमतिक्रम्य प्रवर्तते ॥३२॥**

इति । अनेनैव च मार्गेणान्योऽपि प्रातिपदिकयोगी धात्वर्थयोगी च नञ् अभाववाचकत्वात् प्रच्यावितोऽन्यस्य तत्सदृशस्य तद्विरुद्धस्य वा तत्सहचारिणो वा वस्तुनः प्रत्यायको द्रष्टव्यः । नाभाववमात्रवचनः इत्याह—

नामधात्वर्थयोगी च नैव नञ् प्रतिषेधकः ।

इति । तत्र धात्वर्थयोगिनोऽनन्तरमेवोदाहरणं दत्तम् । नामयोगिनोऽप्यन्यवाचिनो दत्तम् । केवलं नामयोगिनो विरुद्धवाचिनो दातव्यं प्राप्तम् । विवेककथनार्थमुभयोरप्याह—

वदतोऽब्राह्मणाधर्मावन्यमात्रविरोधिनौ ॥३३॥

इति । यथासङ्ख्यमत्र द्रष्टव्यम् ।

यत्र तर्हि—न हन्यात् न पिबेत्—इति प्रतिषेधप्रतीतिकरो नञ् । तत्र किं वाक्यस्यालम्बनमित्याशङ्क्य तत्रापि वस्तु दर्शयति—

यत्राप्याख्यातसंबन्धात् प्रतिषेधः प्रतीयते ।
तत्रौदासीन्यवस्त्वेव प्रतिपत्त्यवलम्बनम् ॥३४॥

इति । हननादिव्यापारे हि प्रवर्तमानो यदा विशिष्टेन विधिना प्रतिषिध्यते तदात्मानमेव तद्व्यापारशून्यमवगच्छतीत्यर्थः ।

तेन यत्र यत्राभावप्रत्ययो भवता सामान्याध्यवसायी दर्शितः तत्र तत्र वस्त्वालम्बनमस्माभिरुक्तम् । त्वत्पक्षे तु न किंचिदस्तीत्युक्तमित्यभिप्रायेणाह—

तस्माद्वस्तुन्यपोहाः स्युरपि चावस्तुकल्पने ।

इति । यदि च—सामान्यप्रत्यया व्यवच्छेदविषयत्वादवस्तुग्राहकाः—इत्युच्यते हन्त तर्हि सर्वस्यैव सामान्यस्यावस्तुरूपत्वात् प्राक् परमाणुभ्यो न किंचिद्वस्त्वस्तीत्युक्तमिति द्रष्टव्यम् । अन्यथा स्वलक्षणमेवाव्यपदेश्यमात्र ते किमुच्यते—

प्रागन्त्येभ्यो विशेषेभ्यो न किंचिद्वस्तु गम्यते ॥३५॥
न चान्त्यैर्व्यवहारोऽस्ति शक्यं नैषा निरूपणम् ।

इति । तदङ्गीकारेणाप्युक्तमेव नेष्टोऽसाधारणस्तावत्—इति ।

किञ्च यदा सामान्यबुद्धीनां न किंचिद्वस्त्वस्ति तदा निरालम्बनत्वमेव बलादापतति । अतश्च सेयं शून्यता वाचोयुक्त्यन्तरेणोक्तेत्याह—

अपोहशब्दवाच्या च शून्यताव्यप्रकाशिका ॥३६॥

इति। नन्वभि.

विशेषः । यदत्र — निर्विकल्पकग्राह्यं स्वलक्षणमस्ति — इत्यभ्युपगतम् सामान्यबुद्धयस्तु तत्पृष्ठभाविस्वांशपर्यवसायिन्य एव—इति । उच्यते । भवत्वेवम् । केवलमेतावद्वक्तव्यः—कोऽयमेवं सत्यन्यापोहः शब्दवाच्य इत्यभ्युपगमः—इति । तदेतदाह—

तस्यां चाश्वादिबुद्धीनामात्मांशग्रहणं भवेत् ।
तत्रान्यापोहवाच्यत्वं मुधैवाभ्युपगम्यते ॥३७॥

इति। ननु किं नामैवं सति वक्तुं युक्तमित्याशङ्क्य कथयति—

सामान्यं वस्तुरूपं हि बुद्ध्याकारो भविष्यति ।
शब्दार्थोऽर्थानपेक्षो हि

इति। एतावदत्र युक्तं वक्तुम्—वस्तुरूपमिदं सामान्यं बहिर्भावशून्यं बुद्ध्यारोपितं शब्देनोच्यते—इति । न पुनरपोहगन्धोऽप्यत्रास्तीत्यर्थः । तदुक्तम्—

मृषापोहः प्रकल्पितः ॥३८॥

इति। किञ्च इदमपरमत्रभवतां व्याहतमिव दृश्यते येन बुद्धिः शब्दसामान्यविषयार्थसामान्यविषया चोपजायमाना वस्तुरूपैवाभिप्रेता। सा शब्देनोच्यते । कथमिदानीमभाववचनत्व शब्दानाम् । न चेत्—वस्तुरूपैव बुद्धिः शब्दार्थसामान्याकारा बुद्ध्यन्तरव्यवच्छेदरूपा शब्देनोच्यते—इति वक्तुं युक्तमित्याह—

वस्तुरूपा च सा बुद्धिः शब्दार्थेषूपजायते ।
तेन वस्त्वेव कल्प्येत वाच्यं बुद्ध्यनपोहकम् ॥३९॥

इति। यथा भवद्भिर्वाक्यार्थः प्रतीयमानोऽपि वस्तुरूपो नास्तीत्येवं मन्यमानैः—प्रतिभाबुद्धिरेव विशिष्टार्थाकारा वाक्यार्थः—इत्युक्तं तथा पदार्-

प्यर्थः प्रतीयमानो यदा नास्तीत्यवगम्यते तदा किमिति—बुद्धिरेव तदाथाकारा पदार्थः—इति नोक्तम्। कोऽयमपरोऽत्रापोहाग्रह इत्याह—

असत्यपि हि बाह्यार्थे वाक्यार्थप्रतिभा यथा।
पदार्थोऽपि तथैव स्यात् किमपोहः प्रकल्प्यते॥४०॥

इति। न च पदबुद्धिर्बाह्यार्थशून्योत्पद्यमानैवमेवोत्पद्यते—बुद्ध्यन्तरव्यवच्छिन्ना भवति—इति। किन्तु गवादिसामान्याकारमात्मानमेव गृह्णाति। अतश्च तत्राप्यपोहगन्धो नास्तीत्याह—

बुद्ध्यन्तराद्व्यवच्छेदो न च बुद्धेः प्रतीयते।
स्वरूपोत्पादमात्राद्धि नान्यमंशं बिभर्ति सा॥४१॥

इति। इदानीं यद्यपि अन्यव्यवच्छेदः शब्दवाच्योऽङ्गीक्रियते तथापि तस्यावस्तुस्वरूपार्थात् सर्वत्राभिन्नरूपत्वम्। अतश्चामी परस्परविलक्षणगोत्वादिवाचिनो ये ये च तद्विशेषशाबलेयककादिवाचिनः शब्दास्तेषामभाववचनत्वाविशेषात् पर्यायत्वं प्राप्तमित्याह—

भिन्नसामान्यवचना विशेषवचनाश्च ये।
सर्वे भवेयुः पर्याया यद्यपोहस्य वाच्यता॥४२॥

इति। ननु यद्वस्तु तद्भिन्नमभिन्नं वा भवति। यत् पुनर्न किंचिदपि तद्यथा भिन्नं न भवति तथाभिन्नमपि न भवत्येव इति कुतः पर्यायत्वम्। उच्यते—यदि तन्न किंचित् ततो वाच्यमपि कथम्। अथ वाच्यमङ्गीक्रियते किंचित् अवच्छेदकल्पनाप्रभेदभिन्नमिति चेत् किमत्यन्तासतः प्रभेदकल्पना। न हि खरशशशृङ्गयोः कंचिद्भेदं प्रकल्पयन् दृष्टः। तत्र पुनरप्येतदेव वाच्यम्—बुद्धिरेव कांश्चिदेकार्थाकारिणो विशेषानतद्रूपानपि तद्रूपतयाध्यवस्यति। अतदाकारिणो नाध्यवस्यति। यथोक्तम्—

तस्माद्यो येन रूपेण विशेषः संप्रतीयते।
न शक्यः स ततोऽन्येन तेन भिन्नव्यवस्थितिः॥ इति।

तत्रापि पुनस्तदेव वाच्यम्। एवं सति स्वालम्बिन्यां बुद्धौ केयमपोहवाचोयुक्तिरिति। तस्मादेतदपि यत्किंचिदिति।

नन्वन्यैव [illegible] । अतश्च कुतः पर्याय-
त्वम् । अथासां [illegible]
दृष्टभेदं वस्तुमात्रमाश्रित्य सर्वमिदं पर्यायत्वं शक्यमापादयितुमिति चोदयति—

ननु भेदादपोहानां प्रसङ्गोऽयं न युज्यते ।
सामान्यापोहकल्प्त्या चेद्वस्तुमात्रे समं तव ॥४३॥

इति । सिद्धान्ती तु स्वमते एव तावद्विशेषं दर्शयन्नाह—

भिद्यन्ते मम वस्तुत्वात् सामान्यानि परस्परम् ।
असङ्कीर्णस्वभावानि न चैकत्वं वितन्वते ॥४४॥

इति । मम हि वस्तुरूपाणि सामान्यानि परस्परविविक्तानि नैकत्वं प्रति-
पद्यन्ते इत्यर्थः । तव त्ववस्तुरूपाणामपोहानां सर्वप्रकारशून्यानां भिन्नत्वव्यप-
देशोऽत्यन्ततुच्छ एवेत्याह—

संसृष्टैकत्वनानात्वविकल्पराहतात्मनाम् ।
अवस्तुत्वादपोहानां तव स्याद्भिन्नता कथम् ॥४५॥

इति । भेदाङ्गीकरणे च तदविनाभावि वस्तुत्वं स्वलक्षणानामिवापोहा-
नामपि प्राप्नोतीत्याह—

यदि वा भिद्यमानत्वाद्वस्त्वसाधारणांशवत् ।

इति । अवस्तुत्वाङ्गीकरणे च तदविनाभावि शशविषाणादीनामिवा-
भेदोऽपि प्राप्नोति । अतश्च स्यादेव सर्वशब्दानां पर्यायत्वमित्याह—

अवस्तुत्वे त्वनानात्वात् पर्यायत्वान्न मुच्यते ॥४६॥

इति । ननु यदि नामावस्तुरूपाणामपोहानां सर्वप्रकारशून्यानां स्वतो
भेदो नास्ति अपोह्यभेदनिबन्धनस्तु केन वार्यते । तथा च भेदे सत्यपर्याय-
त्वमिति चोदयति—

ननु चापोह्यभेदेन भेदोऽपोहस्य सेत्स्यति ।

इति । सिद्धान्तवादी तु स्वाभाविको हि भेदः पर्यायत्वमपनोदयति । न
परोपाधिकः काल्पनिकत्वादित्याह—

न विशेषः स्वतश्चास्य परतश्चौपचारिकः ॥४७॥

इति । यस्मादेव च कारणादौपाधिको भेदो न भिनत्ति तस्मादेवापोहाधारभूतशाबलेयबाहुलेयभेदेनाप्यपोहभेदो न भवतीति । अन्यथासावपि दुर्निवार इत्याह—

तेनैवाधारभेदेनाप्यस्य भेदो न युज्यते ।

इति । न चैतद्वस्तुनोऽपि रूपं दृष्टं यदन्यभेदनिबन्धनं भिन्नत्वम् । न हि वस्त्रालङ्कारभेदेन देवदत्तो भिद्यते । तदेतदाह—

न हि संबन्धिभेदेन भेदो वस्तुन्यपीष्यते ॥४८॥

इति । यत् पुनः न केनचित् संबद्धं न च व्यावृत्त न सामान्यरूप न विशेषरूप निरुपाख्यं तदन्यभेदेनापि कथं भेत्स्यतीत्यभिप्रायेणाह—

किमुतावस्तुसंसृष्टमन्यतश्चानिवर्तितम् ।
अनवाप्तविशेषांशं यत्किमित्यनिरूपितम् ॥४९॥

इति । तस्माद्यथैवाधारभूतपिण्डभेदनिबन्धनोऽपोहभेदो नाङ्गीकृतः तथापोह्यभेदनिबन्धनोऽपि नाङ्गीकृतव्य इत्युपसंहरन्नाह—

तस्माद्यथैव भेदेऽपि पिण्डानां नैष भिद्यते ।
तथैवापोह्यभेदेऽपि नानेकोऽयं भविष्यति ॥५०॥

इति । यदि तु पिण्डनिबन्धनोऽपि भेदोऽङ्गीक्रियते ततः प्रतिपिण्डमगोऽपोहो भिद्यमानो न गवस्य शाबलेयादेरेकाकारः स्यात् । ततश्चाभिमतनिर्वृत्तिसिद्धिः न प्राप्नोतीत्याह—

भेदे वा प्रतिपिण्डं स्यादगोऽपोहस्तथा सति ।
सामान्यं शाबलेयादेरिति नेष्टं प्रसिध्यति ॥५१॥

इति । अथैवमुच्यते—परोपाधिकोऽप्यस्य भेदोऽपोह्यकृत एव भवति नाधारकृतः—इति तदेतदयुक्तम् । यस्मादाधारकृत एवाभ्युपगन्तुं युक्तः ।

येन तैः सहास्य

सोऽपि नास्ति येन त [illegible]

संसर्गिणोऽपि चाधारा यं न भिन्दन्ति रूपतः ।
अपोह्यैः स बहिः संस्थैर्भिद्यतत्यातकल्पना ॥५२॥

इति । किंच यद्यपोह्यभेदात् भेदो भवति अपोह्यैक्यादैक्येनापि भवितव्यम् । अतश्च गोऽश्वयोरपोहं कुर्वतोरगोऽपोहेऽश्वोऽभ्यधिको दृश्यते । अनश्वापोहे च गौरभ्यधिकः । परिशिष्टं तु हस्त्यादिकमपोह्यं द्वयोरपि गवाश्वयोस्तुल्यम् । अतश्च—गोरेकोऽश्वोऽभ्यधिकोऽपोह्योऽस्तीति ततो भिद्यताम् । किं वा हस्त्यादिकर्मभिन्नमिति न भिद्यताम्—इति संशये बहूनामेव हस्त्यादीनां धर्मेण भवितव्यम् । वक्ष्यति हि—विप्रतिषिद्धधर्मसमवाये भूयसां स्यात् सधर्मत्वम्—इति । तदेतदाह—अगव्यीत्यादिना प्रसज्यते इत्यन्तेन श्लोकद्वयेन—

अगव्यश्वातिरेकः स्यादनश्वश्च गवाधिकः ।
शेषं हस्त्याद्यपोह्यं तु द्वयोरपि न भिद्यते ॥५३॥
तत्रैकभेदाद्भेदोऽस्तु बह्वभेदादभिन्नता ।
भूयसां स्यात् सधर्मत्वमित्यभेदः प्रसज्यते ॥५४॥

इति । किञ्च

गौश्च हस्त्याद्यपोहेन नाश्वरूपाद्विशिष्यते ।
करोति तदपोहं चेदैकरूप्यं विरुध्यते ॥५५॥

इति । यदि तूच्येत—यद्यपि गवाश्वयोर्हस्त्यादयो बहवोऽपोह्याः न समानरूपा वर्तन्ते तथापि कुत अभेदः । असाधारणत्वात्तेषाम् । असाधारणेन हि भेदोऽभेदश्च भवति । तेनासाधारणपरस्परापोह्यनिबन्धनोऽस्ति भेद इति न पर्यायत्वाप्तिः—इति । तदेतत्तावत् परमतमनुभाषते—

सर्वशब्देषु चैकैकमपोह्यमतिरिच्यते।
तत्रासाधारणत्वेन तन्मात्रापोह्यता भवेत् ॥५६॥

इति। तदनुभाष्येदानीं दूषयति—

ततोऽश्वापोहरूपत्वात् सिंहादिः सर्व एव ते।
तन्निमित्तमगोऽपोहं बिभ्रदुच्येत गौरिति ॥५७॥

इति। अयमर्थः—सत्यमेवं गवाश्वयोरपर्यायत्वम्। किं तु असाधारण्येन ह्यगोऽपोहोऽश्वापोहो भूतः। स चाश्वापोहः सिंहादेरप्यस्तीति सोऽपीदानीमगोऽपोहवानेव जात इति गोपर्यायः स्यात्—इति।

यदि तु बहुसाधारणादि सर्वमेव न विवक्ष्यते अपि तु समस्तमेवागोरूपमपोह्येत तदेदं वक्तव्यम्—कथमसावगवादिः सर्वोऽपोहनीयः—इति। तत् पृच्छति—

सर्वापोहो यदीष्येत स वक्तव्यः कथं पुनः।

इति। अथ यदि—प्रत्यात्मिकैरेव रूपैरश्वो महिषीत्यादिभिरपोह्यते—इत्युच्यते तदशक्यनिर्वोढव्यमेवाङ्गीकृतं स्यात् तेषामनन्तानामेवापोहितुमशक्यत्वात्। तदाह—

यदि प्रत्येकरूपेण नापोह्यानन्त्यतो भवेत् ॥५८॥

इति। अभ्युपगम्याप्युच्यते—

भिन्नत्वाच्चाप्यपोह्यानां भिन्नोऽपोहः प्रसज्यते।

इति। अपोह्यभेदेन अपोहभेदो भवताङ्गीकृतः स्यात्—

तस्माद्यतो यतोऽर्थानां व्यावृत्तिस्तन्निबन्धनम्।
जातिभेदाः प्रकल्प्यन्ते तद्विशेषावगाहिनः ॥

इति वदता। ततश्च प्रत्येकरूपेणापोह्यमानेष्वश्वादिष्वनन्तत्वादपोह्यव्यावृत्तीनामनेकापोहप्रसङ्ग इत्यर्थः। एवं च कृत्वा यस्मिन् कस्मिंश्चिच्छाबलेयादिपिण्डेऽनेकाश्वमहिष्यादिव्यावृत्तियोगादनेकसामान्याध्यवसायप्रसङ्ग इत्याह—

तत्रैकस्मिन् भवेत् पिण्डेऽनन्तजातिसमन्वयः ॥५९॥

इति। अतश्चापोहपक्षेऽपि गोशब्दोऽनन्तार्थवाची स्यात् नैकसामान्य-वाचीत्याह—

ततो गौरिति सामान्यं वाच्यमेकं न सिध्यति।

इति। न चैकाकारबुद्धिरपि प्राप्नोतीत्याह—

जात्यन्तरमस्तिश्वेषु भवेज्जात्यन्तरेष्विव ॥६०॥

इति। अथैतद्भयात्—अश्वादिसमुदायोऽपोह्यः—इत्युच्यते तदशक्यम्। एकधर्मयोगनिबन्धनत्वात् समुदायस्य। अत्र चैकदेशकालादेरभावात्। तदेतत् सार्धेन श्लोकेनाह—

समुदायात्मना नापि भवेदेषामपोह्यता।
समुदायोऽपि नैकेन विना धर्मेण जायते ॥६१॥
नाप्येकदेशता तेषामस्ति नाप्येककालता।

इति। किञ्च समुदायोऽपि विकल्पनीय एव—किं समुदायिभ्यो व्यतिरिक्तः किं वा न—इति। तत्र व्यतिरिक्तस्तावद्भवतो नाभिमत इत्याह—

व्यतिरिक्तश्च सङ्घातस्तेषां कश्चिन्न विद्यते ॥६२॥

इति। यदि त्वव्यतिरिक्त इत्युच्यते ततस्तदेव प्रत्येकरूपापोह्यत्वेनानन्त्य-मायातमित्याह—

यदि त्वव्यतिरिक्तं स्यादानन्त्यं तदवस्थितम्।

इति। यदि तु प्रत्येकसमुदायपरिहारेण अगोरूपेण सर्वसाधारणेनापो-ह्यत इत्युच्यते तथा सति तस्य त्वन्मतेन वस्तुत्वं नास्तीत्यवस्तुरूपेणापोह्यत्व-मङ्गीकृतं स्यात्। कथं चावस्तुनोऽपोहो भवति। न ह्यभावस्यापरोऽभावो-ऽस्तीत्याह—

यदि सामान्यरूपेण तेऽपोह्यन्ते न वस्तुता ॥६३॥
कथं चावस्त्वपोह्येत नाभावोऽभावमृच्छति ।

इति । किंच अभावव्यावृत्तिरपि विकल्पनीया—किं ततो विलक्षणा किं वा न—इति । वैलक्षण्ये भावरूपापोहप्रसङ्गः । अवैलक्षण्ये त्वपोह्यापोहभावाभावप्रसङ्ग इत्यभिप्रायेणाह—

अपोह्यमाने चाभावे भाव एवावशिष्यते ॥६४॥

इति । किञ्च सर्वेषामगवादीनामनश्वादीनां चाभावरूपतया विशेषाभावादपोह्यभेदोऽप्युच्छिन्नः । तदभावाच्च नापोहभेदोऽपीत्यभिप्रायेण॥

अपोह्यभेदकॢप्तिश्च नाभावाभेदतो भवेत् ।

इति । यदि त्वपोह्यानामभेदेऽप्यपोहभेदनिबन्धनो भेद इत्युच्यते ततोऽपोहभेदस्याप्यपोह्यभेदनिबन्धनत्वादुक्तमितरेतराश्रयत्वमिति स्वयमेवाशङ्क्य दर्शयति—

तद्भेदोऽपोहभेदाच्चेत् प्राप्तमन्योन्यसंश्रयम् ॥६५॥

इति । इतरेतराश्रयत्वमेव प्रपञ्चयति—

गोसामान्यस्य भिन्नत्वादगोरित्येष भिद्यते ।
अगोरित्यस्य भेदेन गोसामान्यं च भिद्यते ॥६६॥

इति । न चाश्वादिप्रत्येकरूपापोह्याश्रयणेनाप्यपोहभेदादितरेतराश्रयत्वपरिहारः । तस्यापि स्वविशेषकर्काद्यपेक्षया सामान्यभूतमभावरूपमिति नान्त्येभ्यः परमाणुभ्यो विना किञ्चिद् वस्तुरूपत्वेनापोह्यं दृश्यते यद्भेदादपोहभेदः स्यादित्याह—

अगावोऽश्वादयश्चेत्स्युस्ते चाभावात्मकाः पुनः ।
कर्काद्यपेक्षया तेऽपि तथेत्येवं न गम्यते ॥६७॥

किमपोह्यं क्व वापोहो गोपिण्डेष्वेवमेव च।

इति। तथाधारनिबन्धनापोहभेदाश्रयणेनाप्यपोह्यभेदाङ्गीकरणमशक्यम्। आधारस्यापि सामान्यरूपतयाभावरूपतया गृह्णातीति। न चायं द्विरूपापोहः गोपिण्डेष्वेवमेव चेति। सर्वं चैतदव्यपदेश्यस्वलक्षणानङ्गीकारेणोक्तम्। तदङ्गीकारेऽप्यानन्त्यादिदोषोऽभिहित एवेति द्रष्टव्यम्। तत्र यदि परमिदानीं वस्तुव्यावृत्तं वस्तु वदतैवं वाच्यम्—कश्चित् परमाणुरपोह्य परोऽपोहरूपतया गृह्णाति—इति। न चायं द्विरूपोऽप्यपोह्यापोहव्यवहारः शब्दनिबन्धनो लोके परमाणुषु दृष्टः। तदेतत् सर्वमाह—

तत्र स्याद्द्वयमप्येतदन्त्येषु परमाणुषु ॥६८॥
न चान्त्येषु द्वयोरस्ति व्यवहारोऽभिधा प्रति।

इति। किञ्च परमाणवोऽपि नावश्निरूपणीयाः यत्—किंनिबन्धनस्तेषां परस्परं भेदः—इति। न तावत् स्वरूपनिबन्धनः परमाणुरूपतेन तस्याविशेषात्। परमाणुत्वादिजातिमत्त्वविशिष्टैव। संस्थानपरिमाणे तु निरवयवत्वनित्यत्वाभ्यामेवाविलक्षणे। अर्थक्रियापि च परमाणुमात्र्यैकरूपेति न तन्निबन्धनो भेदोऽस्ति। अतः परमाण्ववस्थायामपि न ज्ञायते—किमपोह्यं किमपोहकम्—इति। तदेतत् सार्धेन श्लोकेनाह—

गवाश्वपरमाणूनां विशेषश्च न विद्यते ॥६९॥
स्वरूपजातिसंस्थानपरिमाणादिलक्षणः।
केऽपोह्यन्तां क्व चापोहस्तत्रापि न विशेष्यते ॥७०॥

इति। किञ्च एकापोहेनापरस्मिन गृह्यमाणेऽवश्यं पूर्वमसावपोहविषयोऽपोह्यविषयश्च बुद्धावारोपयितव्यः। न च तदुभयमप्येकेन केनचिद्रूपेण पूर्वप्रसिद्धेन विना निरूपयितुं शक्यम्। अतश्च कथमपोहो भविष्यतीति। तदेतच्छलोकद्वयेनाह—

न चाप्रसिद्धसारूप्यानपोहविषयात्मना।
शक्तः कश्चिदपि ज्ञातुं गवादीनविशेषतः ॥७१॥

अपोह्यानपि चाश्वादीनेकधर्मान्वयादृते ।
न निरूपयितुं शक्तस्तत्रापोहो न सिध्यति ॥७२॥

इति । किञ्च अयमपोहः परार्थमानः शब्दलिङ्गावगम्यो भवतामभिप्रेतः । येनैवमुक्तम्—

तस्मादपोहविषयमिति लिङ्गं प्रचक्षते । इति

भिक्षुणाप्युक्तम्—

बहुधाप्यभिधेयस्य न शब्दात् सर्वथा गतिः ।
स्वसंबन्धानुरूपेण व्यवच्छेदार्थकार्यसौ ॥ इति ।

न चागृहीतसंबन्धस्य गोगम्यगमकत्वमस्ति प्रथमदर्शनादप्रतिपत्तेः । न त्वसाधारणेन संबन्धग्रहणमस्ति । अपि तु सामान्येनैवापोहरूपकल्पितेन । न च तच्छब्दलिङ्गप्रतिपत्तेः पूर्वं निष्पन्नमस्ति । अतः केन सह संबन्धं गृहीत्वा लिङ्गशब्देन प्रतीत्यापोहं प्रतीमः तेनाभिमतप्रमाणाभावादपि प्रमेयोऽयं न युध्यते । तदेतच्छ्लोकद्वयेनाह—

नचान्वयविनिर्मुक्ता प्रवृत्तिर्लिङ्गशब्दयोः ।
ताभ्यां च न विनापोहो न चासाधारणेऽन्वयः ॥७३॥
अपोहश्चाप्यनिष्पन्नः साहचर्यं क्व दृश्यताम् ।
तस्मिन्नदृश्यमाने च तयोर्न स्यात् प्रमाणता ॥७४॥

इति । यदि त्वेवमुच्यते—अन्वयप्रधानवादिना भवत्ययं दोषः । व्यतिरेकप्रधानवादिनां तु अन्यत्रादर्शनेन । तेन यतो लिङ्गशब्दौ व्यतिरिच्येते तद्व्यवच्छेदेनापोहः प्रतिपाद्यते—इति तदयुक्तम् । यतोऽनङ्गीकृतान्वयस्य सर्वत्रादर्शनेन सर्वव्यवच्छेदान्न किंचित् प्रत्याय्यं स्यात् । तदेतदाह—

न चादर्शनमात्रेण ताभ्यां प्रत्ययनं भवेत् ।
सर्वत्रैव ह्यदृष्टत्वात् प्रत्याय्यं नावशिष्यते ॥७५॥

इति । सत्यपि यदि यत्किंचिद्व्यवच्छेदेन यत्किंचित् प्रत्याय्यमित्युच्यते ततोऽयमगोऽपोहो यस्य कस्यचिदेकस्यापि पिण्डस्य व्यवच्छेदं कृत्वा यं कंचित् पिण्डं प्रतिपादयन्नविशेषादश्वपिण्डं वा प्रतिपादयेदित्याह—

अथासत्यपि सारूप्ये स्यादपोहस्य कल्पना ।
गवाश्वयोरयं कस्मादगोऽपोहो न कल्प्यते ॥७६॥

इति । किञ्च यदा आदौ नैकरूपं सामान्यमङ्गीकृतं तदा पिण्डापेक्षयैव व्यवच्छेदः कल्पनीयः । ततश्च यथा शाबलेयपिण्डादश्वपिण्डो व्यवच्छिद्यते तथा बाहुलेयपिण्डोऽपि किमिति न व्यवच्छिद्यते । ततश्चायमगोऽपोहः कस्मिन्नेकस्मिन् सर्वपिण्डवर्तिनि वर्ततामित्याह—

शाबलेयाच्च भिन्नत्वं बाहुलेयाश्वयोः समम् ।
सामान्यं नान्यदिष्टं चेत् क्वागोऽपोहः प्रवर्तताम् ॥७७

इति । तदेवमत्र प्रतीकारो भवतु । यदि प्रत्यक्षेणापोहः प्रथमं प्रतीयेत तदा हि तेनैकरूपमपोहं गृहीत्वा शब्दस्तत्र प्रयोक्तुं शक्येतापि । यदा त्वसौ प्रत्यक्षो नाभिमतः प्रत्यक्षेण स्वलक्षणोऽव्यपदेश्येन प्रयोक्तव्यः तदा अप्रतिपन्नाभिधेयः कथं शब्दं प्रयुञ्जीतेत्याह—

इन्द्रियैर्नाप्यगोऽपोहः प्रथमं व्यवसीयते ।
नान्यत्र शब्दवृत्तिश्च किं दृष्ट्वा स प्रयुज्यताम् ॥७८॥

इति । न चैवं वाच्यम्—यद्यपि प्रत्यक्षेणाभिधेयमगृहीत्वा न प्रयोक्तुं शक्यते शब्दः तथाप्यनुमानेन गृहीत्वा प्रयुज्यत एवेति । यतोऽनुमानमप्यगृहीतसंबन्धं न प्रवर्तितुमर्हतीत्युक्तम् । तदेतदाह—

पूर्वोक्तेन प्रबन्धेन नानुमाप्यत्र विद्यते ।

इति । तेनास्तां तावत् संबन्धोत्तरकाले किं शब्दोऽपोहं प्रतिपादयति किं वा नेति । स एव संबन्धोऽस्यानुभवितुमशक्य इत्याह—

संबन्धानुभवोऽप्यस्य तेन नैवोपपद्यते ॥७९॥

इति । किञ्च अगोव्यवच्छेदेन गवि प्रत्याय्यमाने प्रथमं तावदगाव एव प्रत्येतव्याः । ते च सविकल्पकेनैव । सविकल्पकं च शब्दपुरस्सरम् । अतो यस्य गोप्रतिषेधकाः पूर्वं नञादयो न प्रसिद्धाः तस्यागोग्रहणं नास्तीति कथं

तद्व्यवच्छेदेन गोशब्देन गौः प्रत्याय्येत । प्रत्याय्यते चेत् विधिरूपमेव तर्हि सामान्यं प्राप्तं नापोहरूपमित्यभिप्रायेणाह—

निवृत्तिवाचिनः शब्दा न प्रसिद्धाश्च यान् प्रति ।
तेषामगोरसिद्धत्वान्न सामान्यनिराक्रिया ॥८०॥

इति । यस्यापि ते प्रसिद्धाः सोऽप्यगोशब्देन कां निषेधत्विति वक्ष्यमाण दूषणाभिधित्सया पृच्छति—

अगोशब्दाभिधेयत्वं गम्यतां कथं पुनः ।

इति । इतरोऽपि तदेव व्यतिरेकप्राधान्यमाश्रित्य गोशब्दाभिधेयं दर्शयति—

न दृष्टो यत्र गोशब्दः संबन्धानुभवक्षणे ॥८१॥

इति । सिद्धान्तवादी तु—अव्यपदेश्यत्वात् स्वलक्षणस्य न क्वचिद् दृष्टः—इति वक्तु समर्थोऽपि परिहारान्तराभिधित्सया पिण्डे एव संबन्धदर्शनमभ्युपगम्य तद्व्यतिरेकेणागोप्राप्तेः तत्प्रतिषेधेन च गौरेक एव पिण्डः प्राप्नोति । न पिण्डान्तरम् । अतश्च न सामान्यप्राप्तिरित्याह—

एकस्मात्तर्हि गोपिण्डाद्यदन्यत्सर्वमेव तत् ।
भवेदपोह्यमित्येवं न सामान्यस्य वाच्यता ॥८२॥

इति । किंच सिद्धयन्नप्यगोर्गोर्बलात् पूर्वसिद्धां गां करोति । तथा हि—अगौः सिद्धः सन्नपोहितव्यः । तस्य न सिद्धिर्गोव्यतिरेकेण भवति । सा न गोव्यक्तिरेका अप्रतिपन्ने गवि न शक्यते ग्रहीतुम् । अतश्चावश्य प्रथमं विरूप एव सिद्धा गौरङ्गीकर्तव्यः यो नञा प्रतिषेधनीय इत्याह—

सिद्धश्चागोरपोह्येत गोनिषेधात्मकश्च सः ।
तत्र गौरेव वक्तव्यो नञा यः प्रतिषिध्यते ॥८३॥

इति । तदेवं सति यदि गौरप्यगोनिवृत्त्यात्मक एव मन्यते ततोऽप्रतिष्ठमितरेतराश्रयमपि प्राप्नोतीत्याह—

## स चेदगोनिवृत्त्यात्मा भवेदन्योन्यसंश्रयम् ।

इति । यदि पुनरितरेतराश्रयत्वपरिहारार्थं विधिरूपः सिद्धो गौरङ्गीक्रियते ततस्तस्मिन् सिद्धे वृथैवमुत्तरकालीनापोहकल्पनेत्याह—

## सिद्धश्चद्गौरपोहार्थं वृथापोहप्रकल्पनम् ॥८४॥

इति । असिद्धे तु विधिरूपे गवोनरेतराश्रयत्वं प्राप्नोतीति यदुक्तं तदेव दर्शयति—

## गव्यसिद्धे त्वगौर्नास्ति तदभावे च गौः कुतः ।

इति । यत्र पुनरत्र सामान्याङ्गीकरणेनापि संबन्धे गृह्यमाणे—किं स एव अथ सोऽपि—इति विकल्प्य यदि स एवेत्युच्यते ततोऽन्यव्यवच्छेदेन विना कथमवधारणम् । न च व्यवच्छेदोऽसिद्धे गवि शक्यो दर्शयितुम् । न च व्यवच्छेदेन विनासाधारणो गौः सिद्धः । अतस्तुल्यमितरेतराश्रयत्वं प्राप्नोति । यदि पुनरवधारणं नाङ्गीक्रियते तस्मादन्योऽपि गौः प्राप्नोतीति प्रसङ्गापादनं कृतं तदयुक्तम् । यतो वस्तु गृहीत्वायं तावद्गौर्भवतीति संबन्धे गृहीते पश्चात् अन्यत्र तद्वाच्यत्वसंशयो दर्शनेन निवर्तते । तेनावधारणमपि भवतीति । भवतस्तु प्रथमं न किंचित् प्रतिपन्नमिति किं व्यतिरेकाव्यतिरेकेण गृह्यतामिति तद्दुरुत्तरमितरेतराश्रयत्वमित्येव विशेषमजानाना वराकाः सामान्यमापादयन्ति । तत् परेऽनुमोदन्ते इति विजृंभितं तमसाम् । आस्तां तावदिदम् । प्रकृतमनुसंदध्मः ।

एवं तावदपोहशब्दो गवादेरानन्त्यव्यभिचाराभ्यां न विशेषानालम्बते इत्युक्तम् । न च ते किंचिदेकमपरमस्ति यदभिधेयं भविष्यतीत्युक्तम् । तेन यत् भिक्षुणोक्तम्—

न जातिशब्दो भेदानामानन्त्यव्यभिचारतः । इति ।

तदपोहपक्षेऽपि तुल्यमिति प्रकटितम् । इदानीं यज्जातिजातिमत्संबन्धाभिधाने सामानाधिकरण्याभावादिदूषणं भिक्षुणा दत्तम्—

वाचको योगजात्योर्वा भेदार्थैरपृथक् श्रुतेः । इति ।

तदपि त्वदीये पक्षे समानमिति दर्शयितव्यम्। तत्र चैतावदेव तावत् प्रथमं वक्तव्यम्—यदगोव्यावृत्तिरूपस्याभावरूपेण गवा सह संबन्ध एव कश्चिदाधाराधेयरूपो नास्ति इदानीं को वाच्यो भवति—इति। तदेतदाह—

**नाधाराधेयवृत्त्यादिसंबन्धश्चाप्यभावयोः ॥८५॥**

इति। यदिदमुच्यते—नास्माभिरगोव्यावृत्तेर्गवा सह संबन्धोऽभिप्रेतः। किंतु वस्तुरूपेण स्वलक्षणेन सह—इति तदयुक्तम्। अगोव्यावृत्त्या तस्याप्रतीयमानस्य संबन्धित्वायोगादित्याह—

**न चासाधारणं वस्तु गम्यतेऽपोहवत्तया।**

इति। अभ्युपगम्यापि तत्प्रतीतिं कथं वस्तुनोऽगोव्यावृत्त्यावस्तुरूपया संबन्ध इति वक्तव्यम्। भवतो धर्मधर्मित्वादिभेदाभावादित्यभिप्रायेणाह—

**कथं वा परिकल्प्येत संबन्धो वस्त्ववस्तुनोः ॥८६॥**

इति। न चासन्नेवायं बुध्यानारोपितोऽपोहो वस्तु संबन्धुं शक्नोति। अनवगतस्यान्यविशेषणत्वायोगात्। तदाह—

**स्वरूपसत्त्वमात्रेण न च किंचिद्विशेषणम्।**

इति। किं पुनः संबन्धिनो विशेषणस्य स्वरूपमिति चेत् तद्दर्शयति—

**स्वबुध्या रज्यते येन विशेष्यं तद्विशेषणम् ॥८७॥**

इति। कथमिदानीमननुरञ्जकादीनां दण्डादीनां पुरुषविशेषणत्वम्। उच्यते—न ते विशेषणं उपलक्षणत्वात्। अयमेव चोपलक्षणविशेषणयोर्विशेष इति द्रष्टव्यम्। अत्र च संबन्धाभावकथनप्रस्तावे सबन्धिताभावमात्रमेव कथयितव्यं प्राप्तम्। विशेषणत्वाभावकथनद्वारेण तु यत्तत्कथनं कृतं तत्रायमभिप्रायः—गवादिरूपमेवात्र वस्तु प्रतीयते नीलरूपमिवोत्पलम्। तेनात्र विशेषणत्वमेव गवादीनां प्रतीयते। विशेषणत्वे च तद्रूपत्वाद्वस्तुनः कस्य केन संबन्धः यो वाच्यो भवतु। योऽपि कथंचित् कल्प्यते सोऽपि त्वदीयपक्षे न प्राप्नोति। अपोहस्य विशेषणत्वायोगादित्यभिप्रायेण सर्वमिदमुक्तं

इति द्रष्टव्यमिति । एवं च संबन्धाभिधाने सामानाधिकरण्याभावोऽपि य उक्तः सोऽपि त्वत्पक्षे समान इत्यपि द्रष्टव्यम् । किंच बुद्धिरियं तावद्गवादिरूप वस्तु गृह्णत्युत्पद्यते । तत्र यदपोहरूपं तदभावात्मकमित्युच्यते । ततस्तद्रूपयैव बुद्ध्या भवितव्यम् । न चैवमस्ति भावरूपत्वात्तस्या इत्यभिप्रायेणाह—

न चाप्यश्वादिशब्देभ्यो जायतेऽपोहबोधनम् ।

इति । न चाप्रतीयमानेऽभावरूपेऽपोहे तद्विशिष्टवस्तुप्रतीतिर्युक्ता । नागृहीतविशेषणा विशिष्टे बुद्धिरुत्पद्यते यतः । तदेतदाह—

विशेष्यबुद्धिरिष्टेह न चाज्ञाते विशेषणे ॥८८॥

इति । अथैवमुच्यते—यद्यप्यवस्तुरूपोऽपोहः तथापि विशेष्यं वस्तुरूपतया प्रतिभासयति—इति तदयुक्तम् । न हि क्वचिन्नीलोत्पलादावेवं दृष्टं यदन्यरूपं च विशेष्यं प्रतिपादयतीति । तदेतदाह—

न चान्यरूपमन्यादृक्कुर्याज्ज्ञानं विशेषणम् ।

इति । ज्ञाननिबन्धनत्वाच्च वस्तुतुल्यावस्थायां कथं वस्त्वाकारेण प्रतीयमानस्यावस्तु विशेषणमिति भवतोच्यते इत्याह—

कथं चान्यादृशे ज्ञाने तदुच्येत विशेषणम् ॥८९॥

इति । यदि च वस्त्वाकारेण प्रतीयमानस्यावस्तु विशेषणमित्युच्यते ततोऽत्यल्पमिदमुच्यते । समस्तमेव त्रैलोक्यमस्य विशेषणमिति किमिति नोक्तमित्यभिप्रायेणाह—

अथान्यथा विशेष्येऽपि स्याद्विशेषणकल्पना ।
तथा सति हि यत्किंचित् प्रसज्येत विशेषणम् ॥९०॥

इति । यथा तु भवद्दर्शनम्—अभावरूपोऽपोहो वस्तु विशिनष्टि—इति तथाहि तस्याभावरूपस्यैव प्रतीतिः स्यात् । न वस्तुरूपस्य । न हि नीलविशिष्टोत्पलस्य पीतरूपता दृष्टेत्यभिप्रायेणाह—

## अभावरूपगम्ये च न विशेष्येऽस्ति वस्तुना ।

इति । तस्माद्विमुच्यतामियमाशा अपोहेनाभावरूपेण विशिष्टं वस्तु प्रत्याय्यते इति इत्याह—

## विशेषितमपोहेन वस्तु वाच्यं न तेऽस्त्यतः ॥९१॥

इति । संबन्धवाच्यत्वाभाव एवायमनेन प्रकारेणोपसंहृत इति द्रष्टव्यम् । न पुनरयं तद्वदभिधानपक्षः वक्ष्यमाणत्वात् । तस्माददोषः ।

यापीयं हतबुद्धेर्बौद्धस्य कष्टाशा—वस्तु सर्वात्मकमेव निर्विकल्पकेन प्रतिपन्नम् । कथं तदेव सविकल्पकेन पुनरपि गृह्यते । तेन व्यवच्छेदरूपविषयं तत्—इति साप्यनुपपन्ना यतः प्रतिभासमानस्य हि सफलत्वं नाप्रतिभासमानस्य । वस्तुमात्रं च शब्दलिङ्गज्ञाने प्रतिभासते । तत्र यदि तथा तः फलं भवति कामं तदेव साधीयः प्रतीत्यनुगुणत्वात् इत्यभिप्रायेणाह—

## यद्यप्यपोहनिर्मुक्ते न वृत्तिर्लिङ्गशब्दयोः ।
## युक्ता तथापि बोधस्तु ज्ञातुर्वस्त्ववलम्बते ॥९२॥

इति । अत्रापरो वदति—सत्यं सविकल्पकेऽपि वस्तु प्रतीयते । न तु तेनैव तदिति मन्तव्यम् । अस्ति हि तत्रापि समानकालीननिर्विकल्पकं वस्तुग्राहकम् । तेन तत् प्रतिभास्यते । भ्रान्त्यात्र सविकल्पकगृहीतमिव तदध्यवस्यति—इति । तदयुक्तम् । तदानीं निर्विकल्पकग्राह्यस्यासाधारणस्याप्रतिभासमानत्वादित्याह—

## न चासाधारणं वस्तु बुद्धौ विपरिवर्तते ।

इति । प्रतिभासमानत्वेऽपि सविकल्पकस्य तु तदध्यवसानं कुतः । तस्य निर्विकल्पकत्वात् भ्रान्तौ प्रमाणाभावाच्चेत्यभिप्रायेणाह—

## न चापि निर्विकल्पत्वात्तस्य युक्ता विशेष्यता ॥९३॥

इति । यदि तु—सत्यं वस्तु न प्रतीयते । वस्तुग्राहकनिर्विकल्पकपृष्ठभावित्वात्तु तदध्यवसायः—इत्युच्यते तदप्ययुक्तम् । कथमप्रतीयमानस्य विशिष्टत्वमित्याह—

शब्देनागम्यमानं च विशेष्यमिति साहसम् ।

इति । तेनास्याः सविकल्पकबुद्धेः शब्दस्य च विमुख्येनमन्यापोहविशिष्ट-वस्तुग्रहं सामान्यमालम्बनमुच्यताम् । एवं हि तव मुख्यमित्याह—

तेन सामान्यमेष्टव्यं विषयो बुद्धिशब्दयोः ॥९४॥

इति । किं च अपोह्यापोहकयोः संबन्धेऽपि प्रतीयमानेऽवश्यमपोह्यस्तावत् प्रथमं प्रत्येतव्यः संबन्धिग्रहणपूर्वकत्वात् संबन्धप्रतिपत्तेः । न चापोह्यैर्विनासौ प्रत्येतुं शक्यः । अपोह्याश्च न व्यक्तयः तासामशब्दवाच्यत्वात् । अतः सामान्यमेवापोहितव्यम् । तच्चापोह्यमानं वस्तुरूपं प्राप्तमिति वृथा तदपोह्यस्यावस्तुत्वाभिधानमित्यभिप्रायेणाह—

यदा चाशब्दवाच्यत्वान्न व्यक्तीनामपोह्यता ।
तदापोह्येत सामान्यं तस्यापोहाच्च वस्तुता ॥९५॥

इति । यदि पुनः—अवस्तुभूतमेव सामान्यमपोह्यते—इत्युच्यते तदयुक्तम् । तद्व्यावृत्तिस्वरूपो हि तदपोहः । न चावस्तुनो व्यावृत्तिसंभवः । द्वयोरपि वस्तुनोर्विशेषाभावादित्यभिप्रायेणाह—

नापोह्यत्वमभावानामभावाभाववर्जनात् ।

इति । तस्मादवश्यं योऽयमपोह्यान्तरेऽनतिरिक्तरूपे परस्माद्भावाद्व्यावृत्तिरूपोऽपोहः स सामान्यस्य वस्तुरूपस्यैवाङ्गीकर्तव्य इत्युपसंहरन्नाह—

व्यक्तोऽपोहान्तरेऽपोहस्तस्मात् सामान्यवस्तुनः ॥९६॥

इति । यदि वा भवतु नाम वस्तुनोऽप्यभावः । किन्त्वसौ विकल्पनीयः—किं ततो विलक्षणः किं वा न—इति । वैलक्षण्ये पुनरपि वस्तुरूपमेव सामान्यमायातम् । अवैलक्षण्ये पर्यायत्वम् । किं केन विशिष्टमित्याह—

अभावस्य च योऽभावः स चेत्तस्माद्विलक्षणः ।
भाव एव भवेन्नो चेद्गौरगौस्ते प्रसज्यते ॥९७॥

**यद्यप्यन्येषु शब्देषु वस्तुनः स्यादपोह्यता ।**
**सच्छब्दस्य स्वभावाख्यान्नापोह्यं भिन्नमिष्यते ॥९८॥**

इति । किंच अयं प्रसङ्गः—गोशब्दापोहे कदाचिदगवाश्वादीनां भिन्नमिष्यते—इति । अत्रापि यद्येवमुच्यते—वस्तुरूपा एवासन्तः—इति ततः सदसद्विवेकाभावेन क्लिष्टो देवानांप्रिय इत्याह—

**तत्रासतोऽपि भावत्वमिति क्लेशो महान् भवेत् ।**

इति । यावत् पुनरसतां भावो नाङ्गीक्रियते तावत्तद्व्यतिरेकिणः सत्तापि नैव भवतो भवतीत्याह—

**तदसिद्धौ न सत्तास्ति**

इति । असत्यां च पूर्वसिद्धायां सत्तायामसत्ताकल्पनापि कथं कल्प्या । सापि हि सत्ताव्यतिरेकेणैव गत इत्यभिप्रायेणाह—

**न चासत्ता प्रसिध्यति ॥९९॥**

इति । सर्वपूर्वोक्तदोषपरिहारेणेदानीमपोहवादी प्रत्यवतिष्ठते । स हि वदति—नायं वस्तुसंनिवेशी शाब्दो व्यवहारः । किन्त्वनादिवासनाभेदजनितज्ञानभेदनिबन्धनः । तेन कांश्चिदेवैकार्थकारिणः पिण्डानवलोक्य कापि वासनोद्भवति । सा च तानसद्रूपानतद्रूपानिवावभासयति । अत एव च तदर्थक्रियाकारिवस्तुलाभाद्बाधकप्रत्ययोऽप्यस्य न भवति मणिप्रभायामिव मणिबुद्धेर्मणिसाध्यार्थक्रियाकारिवस्तुलाभेन । पारम्पर्यलब्धव्यावृत्तरूपवस्तुनिबन्धनश्चायमपोहव्यवहारः । न पुनः प्रतीतिरेवान्यव्यवच्छेदेनोत्पद्यते इति कृत्वा । तथा सामानाधिकरण्यादिव्यवहारोऽपि विज्ञानघटितः न वस्तुघटितः । तदेव हि वस्तु कस्मिंश्चिच्छाब्दे ज्ञानेऽवभासमानं धर्मान्तरसापेक्षमिव प्रतिभासते । शब्दान्तरप्रतिभासितेन पुनर्विशिष्टमिव गृह्यते । क्वचित्पुनः प्रतिक्षिप्तधर्मान्तरं स्वनिष्ठमिव । अतश्च नान्येन पुनर्विशेष्यते—इति । तदुक्तम्—

यथा प्रतीतिघटितः शब्दार्थोऽसावसन्नपि ।
सामानाधिकरण्यं च वस्तुनास्य न संभवः । इति ।

तदेतद्दूषयति—

न चापि वासनाभेदाद्भेदः सद्रूपतापि वा ।
अपोहानां प्रकल्प्येत न ह्यवस्तुनि वासना ॥१००॥

इति । अयमर्थः । प्रतिपन्नं हि वस्तु चित्तं वासयति । यत् पुनर्न कदाचिदपि प्रतिपन्नं सामान्यरूपं तत् कथं वासनां जनयति ।

अथैवमुच्यते—प्रतिपन्नमेवार्थक्रियाकारि वस्तु । तज्जनिता च वासना सामान्याकारां बुद्धिं जनयति—इति । तदयुक्तं यस्मात् पूर्वविज्ञानविषयाकारबुद्धिजनिता हि वासना नाप्रतिपन्नाकारबुद्धिजनिता । तदुक्तम्—वस्तुधर्मो ह्येषः यदनुभवः पटीयः स्मृतिबीजमाधत्ते—इति । तदेतदाह—

स्मृतिं मुक्त्वा न चाप्यस्याः शक्तियोगः क्रियान्तरे ।

इति । तस्मान्नास्त्यन्यादृशे स्वलक्षणे प्रतिपन्नेऽन्यादृशस्य सामान्याकारस्य ज्ञानस्य वासनातः प्राप्तिरित्याह—

तस्मान्नान्यादृशे सार्थे करोत्यन्यादृशीं मतिम् ॥१०१॥

इति । एवं तावदर्थापोहोऽपोहो निराकृतः । शब्दापोहमिदानीं वासनाप्रसङ्गेन निराकरिष्यन्नाह—

भवद्भिः शब्दभेदोऽपि तन्निमित्तो न लभ्यते ।

इति । वासनानिमित्तः शब्दापोहभेदो न भवद्भिर्लभ्यते पूर्वोक्तेनैव मार्गेणेत्यभिप्रायः । न च निर्विकल्पकग्राह्येण रूपेण शब्दोऽर्थं प्रतिपादयति तस्य संबन्धादर्शनात् । यथोक्तम्—

नार्थे शब्दविशेषस्य वाच्यवाचकतेष्यते ।
तस्य पूर्वमदृष्टत्वात् सामान्यमपदेक्ष्यते ॥ इति ।

तदाह—

न ह्यसाधारणः शब्दो वाचकः प्रागदृष्टितः ॥१०२॥

इति । यथा अर्थविशेषविज्ञानमेकाकारबुद्धिजननसमर्थवासनोत्पादनक्षमं न भवतीत्युक्तं तथा शब्दविशेषज्ञानमपीत्याह—

भिन्नत्वाच्चापि नैवैका वासना तैः प्रसाध्यते ।

इति । तदेवं वासनापक्षोऽप्यत्र भवति यदि पूर्वप्रतिपन्नमेकरूपं शब्दसामान्यमभ्युपगम्यते । न च तद्भवतामभिमतमित्याह—

न चास्ति शब्दवस्त्वेकं वासनां यत्करिष्यति ॥ १०३

इति । अतश्च वासनाकल्पितभेदशब्दसामान्याभावे शब्दान्तरव्यवच्छेदरूपे गृह्यमाणे व्यवच्छेदानामभावरूपत्वेनाविशेषात् नैव शब्दसामान्यानामर्थसामान्यानामिवैकरूपत्वं प्राप्तमित्याह—

तत्र शब्दान्तरापोहे सामान्ये परिकल्पिते ।
तथैवावस्तुरूपत्वाच्छब्दभेदो न लभ्यते ॥ १०४

इति । एवमेकैकशो वाच्यानां वाचकानां च पर्यायत्वमुक्तम् । इदानीमनेनैव न्यायेनोभयेषां वाच्यमित्याह—

वाचकानां यथा चैवं वाच्यानां च तयोर्मिथः ।

इति । यथा चार्थापोहानां अपोह्यानन्त्येऽपि भेदो नास्तीत्युक्तं एवं शब्दापोहानामपि वाच्यमित्याह—

न चाप्यपोह्यभेदेन भेदोऽस्तीत्युपपादितम् ॥ १०५ ॥

इति । यथा चापोहस्य पूर्वमगृहीतस्य शब्देन प्रत्यायकत्वं नास्तीत्युक्तं एवं शब्दापोहस्यापि वाचकत्वमपि वाच्यमित्याह—

नागृहीतश्च गमकः शब्दापोहः कथंचन ।

इति । न च तद्ग्रहणे प्रत्यक्षं प्रभवति शब्दलिङ्गगम्यत्वादपोहस्य । तयोश्च तदानीमसिद्धत्वादित्याह—

प्रत्यक्षं न च तच्छक्तं न च स्तो लिङ्गवाचकौ ॥ १०६
येन स्याद्ग्रहणं तस्य

इति । यदि त्वर्थगमकशब्दापोहग्रहणेऽपरलिङ्गं शब्दान्तरं वा गमकमिष्यते ततस्तयोरपि सामान्यरूपत्वात्तथैवापरलिङ्गशब्दान्वेषणं कार्यम् । तत्राप्यपरान्वेषणमिति कुतः प्रत्यक्षेण मूलभूतेन विना व्यवस्थेत्याह—

लिङ्गादीनां च कल्पने ।
न व्यवस्थेति वाच्येवं विना प्रत्यक्षमूलतः ॥१०७॥

इति । व्यवस्था नेत्यन्वयः कार्यः । इदानीमवस्तुरूपार्थशब्दापोहयोरनुमानेन गम्यगमकत्वं निषेधयन्नाह—

न गम्यगमकत्वं स्यादवस्तुत्वादपोहयोः ।
भवत्पक्षे यथा लोके खपुष्पशशशृङ्गयोः ॥१०८॥

इति । यदि तु कश्चिन्मेघाभावेन वृष्ट्यभावानुमानं पश्यन्—अवस्तुत्वात्—इतीमं हेतुमनैकान्तिकं वदेत् तदासौ वक्तव्यः—नायमनैकान्तिकः । अत्रापि मम मेघविनिर्मुक्तं नभस्तलं वृष्टिविनिर्मुक्ता च पृथिवी वस्त्वस्ति । तत्र तदपि नास्तीति गम्यगमकत्वमपि नास्ति । सर्वसामर्थ्योपाख्याविरहलक्षणं तदङ्गीकृतं यत इत्याह—

वृष्टिमेघासतोर्दृष्ट्या यद्यनैकान्तिकं वदेत् ।
वस्त्वेवात्रापि मत्पक्षे भवत्पक्षे त्वदः कुतः ॥१०९॥

इति । किंच—यथा सामान्ये गोत्वात्मके पूर्वमसिद्धे तद्व्यतिरेकिणो नागावः सिध्यन्ति तथात्रापि विरूपे शब्दसामान्ये पूर्वमसिद्धे कुतस्तद्व्यतिरेकेण गोशब्दस्य सिद्धिरित्याह—

विधिरूपश्च शब्दार्थो येन नाभ्युपगम्यते ।
न भवेद्व्यतिरेकोऽपि तस्य तत्पूर्वको ह्यसौ ॥११०॥

इति । यथा चागोव्यावृत्त्या गौर्गृह्यमाणोऽपि नावस्तुनालम्बनभूतेन शक्यते ग्रहीतुमित्युक्तम् । न च निरालम्बना बुद्धिः संभवतीत्युक्तम् । तथा तत्रागोशब्दापोहेऽपि वाच्यमित्याह—

निषेधद्वययोगित्वादसतो याप्यभावना ।
सावस्तुके भवेत्सापि न तुच्छे बुद्ध्यसंभवात् ॥१११

इति । अत्रापरश्चोदयति—

ननु युक्त्यानयैवायं वस्तुनोऽपि न भिद्यते।
अपोहस्तेन दोषोऽत्र न पूर्वोक्तो भविष्यति ॥११२॥

इति। वस्तुनिबन्धनो हि भेदाभेदव्यवहारः। अतश्च यथैवापोहानां परस्परभेदो नास्तीति चोदितं तथा स्वलक्षणादपि कथं भिद्यते। तेन स्वलक्षणाव्यतिरेकित्वात्तेषामस्त्येव रूपान्यव्यवच्छेदग्राहिणीति नापरा गतिरस्ति। एतदुक्तं भवति—कदाचित् स्वलक्षणस्यान्यव्यवच्छेदं गृह्णातीति भ्रान्त्या वस्त्वाकारप्रतिभासात् कदाचित् सामान्यमेव वस्तुरूपमन्यव्यवच्छेदरूपं गृह्णातीति फलतोऽपोहविषयेति नापरा गतिरस्तीत्याह-

सिद्धमेव मदिष्टं स्यान्नैवान्या गतिरस्ति हि।
अभावे भावबुद्धिर्वा यद्वा वस्तुन्यभावधीः ॥११३॥

इति। तत्र यद्याद्यः ततो भ्रान्तेर्निमित्तत्वं वक्तव्यम्। न च तदस्तीत्यभिप्रायेणाह—

तत्राभावात्मकत्वं स्यान्निर्निमित्तैव वस्तुधीः।

इति। उत्तरस्तु पक्षोऽभिमत एवास्माकं गोत्वाश्वत्वाद्यभावाङ्गीकरणादित्यभिप्रायेणाह—

वस्तुन्यभावबोधस्तु सिद्धस्त्वन्यमपक्ष्य तु ॥११४॥

इति। अतश्च फलतोऽपोहविषयत्वं सामान्याभिप्रायेणैव युज्यते। न स्वलक्षणाभिप्रायेणेति सूचितम्। एवं व्यक्त्यभिधानपक्षे दोषसामान्यमुक्त्वा इदानीं जात्यभिधानपक्षे विशेषशब्दस्य घटादेः सामान्यशब्दस्य च सदादेः विशेषणविशेष्यभावः सामानाधिकरण्यं च न प्राप्नोति सन् घटः इति—इति यदुक्तं तदपोहपक्षेऽपि समानमिति योजयिष्यन् पक्षग्रहणं तावत् करोति—

अपोहमात्रवाचित्वं यदि वाभ्युपगम्यते।

इति। अत्र नीलोत्पलादिशब्देषु विशिष्टार्थवाचकेषु सामानाधिकरण्यं विशेषणविशेष्यादिव्यवहारो वा न प्राप्नोतीत्यक्षरत्रयाधिकेन श्लोकेन प्रतिजानान आह—

नीलोत्पलादिशब्देषु शबलार्थाभिधायिषु ॥११५॥
विशेषणविशेष्यत्वसामानाधिकरण्ययोः ।
न सिद्धिः

इति । तत्र विशेषणविशेष्यभावासिद्धौ तावत् कारणमाह—

न ह्यनीलत्वव्युदासे नूत्पलच्युतिः ॥११६॥
नापि तत्रेतरस्तस्मान्न विशेष्यविशेषणे ।

इति । यथैव हि घटादिजातिरघटादिजातिरित्यनेन—न घटः—इति न भवति तथैवानीलापोहेऽनुत्पलापोहोऽनुत्पलापोहे वानीलापोहो नास्तीति ते न विशेषणविशेष्यभाव इत्यर्थः । न च शब्दविकल्पजाननविकल्पनिमित्त एवायमिति परितुष्य स्थातव्यं निरालम्बनबुद्ध्यनुत्पत्तेरित्याह—

शब्दयोर्नापि ते स्यातामभिधेयानपेक्षयोः ॥११७॥

इति । परस्परसमवायित्वाभावेनैव नीलोत्पलापोहयोर्जात्योरिव सामानाधिकरण्यमपि प्रतिक्षिप्तमित्याह—

सामानाधिकरण्यं च न भिन्नत्वादपोहयोः ।

इति । किंच जातिपक्षे कदाचिदेकार्थसमवायसंबन्धाश्रयणेन सामानाधिकरण्यमुच्यते । त्वत्पक्षे त्ववस्तुरूपयोरपोहयोरेकस्मिन्नर्थे समवायासंभवात्तद्द्वारेणापि न संभवतीत्याह—

अर्थतश्चेत्तदिष्येत कीदृश्याधेयता तयोः ॥११८॥

इति । किंच भवतु नामापोहयोरेकार्थसमवायः । स त्वेकार्थो न तावत् स्वलक्षणम् । तस्य हि विकल्पेनाप्रतीतेः । न च तद्व्यतिरिक्तमङ्गीकृतं भवतेत्याह—

न चासाधारणं वस्तु गम्यतेऽन्यच्च नास्ति ते ।

इति । यदि तु—मा नाम स्वलक्षणं गम्यताम् । तत्—अस्ति तु तावत्—इत्युच्यते तदयुक्तम् । शाब्दे प्रतिभासेऽप्रतिभासमानस्य निमित्तत्वायोगादित्याह—

**अगम्यमानमैकार्थ्यं शब्दयोः क्वोपयुज्यते ॥११९॥**

इति । एवमपोहमात्राभिधाने दोषसाम्यमुक्त्वा जातिमदभिधानेऽपि—

तद्वतो नास्वतन्त्रत्वात्

इत्यादिना सामानाधिकरण्याभावादि यद्भिक्षुणोक्तं तदपोहवदभिधानेऽपि समानमित्युपपादयिष्यन् पक्षपरिग्रहं तावत् करोति—

**अथान्यापोहवद्वस्तु वाच्यमित्यभिधीयते ।**

इति । अत्र भिक्षुराह—जातिशब्दः सदादिस्तद्विशिष्टमेव द्रव्यमभिदधत् तद्गतमेव घटादिविशेषरूपमाक्षिपति । परतन्त्रो ह्यसौ सत्तां निमित्तीकृत्य द्रव्ये प्रवर्तते न तु स्वतन्त्रः । सद्विशेषणविशिष्टं द्रव्यं वक्ति । ततश्च घटादेस्तेन सच्छब्देनानाक्षेपान्नास्ति तद्वाचिना सामानाधिकरण्यम् । न ह्येकोपाधिविशिष्टे द्रव्येऽभिहिते परोपाधिना सामानाधिकरण्यं भवति । यथा मधुरशब्देन माधुर्योपाधिविशिष्टं खण्डद्रव्यमभिदधता तद्गतापरशुक्लाद्यनाक्षेपात् तेन न सामानाधिकरण्यं यथैतन्मधुरं श्वेतं इति तथैतेनापि न भाव्यं सन् घटः इति—इति । तदेतत्सर्वमस्मिन्नपि पक्षे समानमित्याह—

**तत्रापि परतन्त्रत्वाद्व्याप्तिः शब्देन दुर्लभा ॥१२०॥**

इति । तत्रापि ह्यसदपोहविशिष्टद्रव्यं प्रतिपादयन् सच्छब्दः परतन्त्रो वर्तते । नासौ तद्गतमपरमघटादिव्यावृत्तं सदाक्षेप्तुं समर्थ इत्यभिप्रायः । अतश्च तथैव खण्डादिद्रव्ये मधुरादिभिः शब्दैरात्मीयामधुराशुक्लादिव्यावृत्तमात्रप्रवृत्तेः परस्परं शुक्लमधुरत्वादिव्याप्त्यसम्भवेनाक्षेपो नास्ति । अतश्च मधुरं शुक्लमिति विशेषणं न भवत्येव । सच्छब्देनाप्यसद्व्यावृत्तिमात्रविशिष्टद्रव्याभिधायिना परा तद्गताघटादिव्यावृत्तिराक्षेप्तुं न शक्यते । ननु कथमत्रापि सन् घट इति सामानाधिकरण्यम् । तदेतत् सर्वं श्लोकद्वयेनाह—

**खण्डभिन्नव्यपोह्यत्वाद्यथैव मधुरादिभिः ।**
**शुक्लादिव्याप्त्यभावेन नाक्षेपो न विशेषणम् ॥१२१**
**तथैवासद्व्युदासांशविच्छिन्नार्थावधारणे ।**
**नाघटादिनिवृत्त्यंशव्याप्तिः शब्दात् प्रतीयते ॥१२२**

इति । स्यादेतत् । मा नामाघटादिव्यावृत्त्यंशं सच्छब्दो व्याप्नोतु । यः पुनरसावर्थोऽसद्व्यावृत्तिविशिष्टः स तावद्व्याप्नोतीति । तदेतदस्मत्पक्षेऽपि तुल्यम् । अस्माकमपि सच्छब्दाभिहिता सत्ता यस्मिन्नर्थेऽस्ति स घटादिविशिष्टः शक्नोत्येव नानाक्षेप्तुम् । किमपोहग्रहणेनेति स्वयमेवाशङ्कयाह—

व्याप्तिश्चेदर्थरूपेण सत्तयैव हि सा भवेत् ।

इति । सत्तापि ह्यसद्व्यावृत्तिरिव घटादिपदार्थव्यापिन्येवेत्याह—

न घटत्वादिमानर्थः कश्चिन्न व्याप्यते तया ॥१२३॥

इति । न हि विधिमुखप्रवृत्ततया वस्तुरूपेणापि या घटत्वादिव्याप्तिः सा निवारयितुं शब्दस्य शक्येत्याह—

न हि वस्तुतया व्याप्तिस्तया शब्दस्य वार्यते ।

इति । प्रतीतितो वार्य इति चेत् तदपोहपक्षेऽपि तुल्यमित्याह—

प्रतीतिं प्रति तुल्यस्तु व्यापारो वस्त्ववस्तुनोः॥१२४

इति । अथैवमुच्यते—मम निर्भागं वस्तु । तथापि न तथानेन प्रतिपादनीयं ततोऽशान्तराणामप्रतिपत्तेः । अत एव चैतदपि यत्किञ्चिदित्याह—

निर्भागोऽपि च वस्त्वात्मा शब्दैर्भागेण गम्यते ।
तेन सच्छब्दविज्ञानाद्घटाद्यर्थः प्रतीयते ॥१२५॥

इति । तस्मादेकांशविशिष्टपदार्थाभिधाने पराशानाक्षेपदोषो यो भवतो-द्भावितः स तत्रापि तुल्य उपपादित इत्युपसंहरन्नाह—

तेनानाक्षेपदोषोऽस्ति

इति । यः पुनरस्मिन्नेव पक्षेऽपरो दोषोऽभिहितः—सच्छब्दोऽपि भूतार्थेन स्वरूपं जातिं वाह । तत्र प्रवृत्तस्तद्वत्युपचर्यमाणे गौणः स्यात्—इति सोऽपि समान इत्याह—

भाक्तदोषश्च विद्यते ।

इति । तत्रापि ह्यपोहविशिष्टं पदार्थमभिदधतो जातिन्यायेनैवापोहो मुख्यः । तद्वांस्तु गौण इत्याह—

**विशेषणत्वान्मुख्यत्वमपोहस्य च जातिवत् ॥ १२६ ॥**

इति । एतदेवोपसंहरति—

**तस्मात्तद्वति गौणत्वान्नाभिधेयत्वसंभवः ।**

इति । अथैवमुच्यते—नायं मम दोषो भवति येनापोहो नाम न किंचित् । कुतस्तस्य मुख्यत्वम्—इति । तदेतदयुक्तम् । यदि तन्न किंचित् विशेषणमपि तर्हि न प्राप्नोति । अतश्च तद्विशिष्टपदार्थाभिधानपक्षे दुर्घट इत्यभिप्रायेणाह—

**अवस्तुत्वान्न मुख्यं चेन्न स्यादेवं विशेषणम् ॥ १२७**

इति । यत् पुनरेतस्मिन्नेव पक्षे भिक्षुणोक्तम्—जातिविशिष्टेष्वभिधीयमानेषु स्वलक्षणान्येवाभिधेयानि प्राप्नुवन्ति । तेषामानन्त्यव्यभिचाराभ्यामवाच्यत्वमुक्तम्—इति । तदुक्तम्—

तद्वांस्तु भेद एवेष्टः स च पूर्वं निराकृतः । इति ।

तदप्यत्र समानमित्याह—

**भेदाश्चापोहवन्तः स्युस्तेषां चावाच्यतोदिता ।**
**आनन्त्यव्यभिचाराभ्याम्**

इति । न च भेदव्यतिरिक्तोऽन्यः कश्चिदेकोऽस्ति योऽपोहेन विशिष्यते इत्यभिप्रायेणाह—

**अन्यो नास्ति त्वपोहवान् ॥ १२८**

इति । यच्चात्र भिक्षुणा जातिमत्त्वमात्रं वाच्यं भविष्यतीत्याशङ्क्य विकल्पितम्—अथ जातिमत्त्वं किं जातितद्वतोः संबन्धः किं वा सामान्यरूपम् – इति । एवं च विकल्प्य—पूर्वोक्तजातिसंबन्धाभिधानदोषो योजनीयः—इत्युक्त्वोक्तम्—

तद्वन्मात्रेऽपि संबन्धः सत्ता वेति विचारितम् । इति ।

तदपि समानम् । तत्रापि ह्यपोहवत्त्वं नाम न किंचिदभिमतमित्याह—

**नापोहवत्त्वमन्यद्धि भेदापोहान्तरेऽस्ति ते ।**

इति । भेदापोहान्तरे—इति एकस्मात्स्वलक्षणादपरस्मिन् स्वलक्षणे यदपरमपोहान्तरं तस्मिन्नित्यर्थः । अस्तु नाम तदेकापोहवत्त्वम् । इदं तु विकल्पनीयम्—किं भावरूपं उताभावरूपम्—इति । भावरूपं चेत् सामान्यापत्तिः । अभावरूपं चेत् सर्वेषामेवापोहवत्त्वेनाविशेषात् पर्यायत्वादिदूषणं पूर्वोक्तमापादयितव्यमित्याह—

**तत्रापि कल्प्यमानं स्यादभावो भाव एव वा ॥१२९**
**वस्तुत्वे जातिरेव स्यादवस्तुत्वेऽपि पूर्ववत् ।**

इति । किंच अपोहवत्त्वमिति मतुबन्तादयं भावप्रत्ययः कृतः । स च संबन्धवाच्यपि स्मर्यते । यथाह—समासकृत्तद्धितेषु संबन्धाभिधानं भावप्रत्ययेन अन्यत्र रूढ्यभिचरितसंबन्धेभ्यः—इति । न च संबन्धस्य वाच्यत्वमस्तीत्युक्तमित्याह—

**संबन्धो वैष कल्प्येत तस्य चेष्टा न वाच्यता ॥१३०**

इति । यदपि चास्मिन् पक्षे भिक्षुणोक्तम्—यदा गोत्वविशिष्टः शाबलेयो गोशब्दस्य वाच्यमित्यङ्गीकृतं तदासौ बाहुलेये नास्तीति । तत्र गोशब्दप्रवृत्तिर्न स्यात्—इति । तदुक्तम्—

तद्वानर्थो घटादिश्चेन्न पटादिषु वर्तते ।
सामान्यमर्थः स कथम् । इति ।

तदपि समानम् । अगोऽपोहविशिष्टः शाबलेयो बाहुलेये नास्तीति कथमसौ गोशब्देनाभिधेयः स्यात् । तदेतदाह—

**न चैकापोहवानर्थो वर्ततेऽर्थान्तरे क्वचित् ।**

इति । तेनातोऽपि कारणान्नास्त्येकं किंचित् सामान्यं वाच्यमित्युपसंहरन्नक्षरद्वयाधिकेन श्लोकपादेनाह—

**तस्मादपि न सामान्यं वाच्यम्**

इति । यदपि च—अत एव कारणादेकस्मिन् सत्ताविशिष्टे वस्तुन्यभिहिते परत्र तदभावात्तेन सह विशेषणविशेष्यभावो नास्ति—इत्युक्तं तदपि

समानम् । तत्रापि ह्येकापोहविशिष्टं नापरत्रास्तीति कथं तेन विशेषणविशेष्यभावं यायात् । तदाह—

न च विशेषणम् ।

इति । यदपि च भिक्षुणा शङ्कितम्—मा भूत् पिण्डान्तरेण विशेषणविशेष्यभावः । तस्मिन्नेव पिण्डे सत्तादिविशिष्टेऽभिहिते परतद्गतविशेषाकाङ्क्षायां विशेषणादिव्यवहारो भविष्यति 'सन् घटः' इति । यथा नीलशब्देन नीलगुणेऽभिहिते तद्गतविशेषापेक्षया तरवादिविशेषणं भवति नीलतरो नीलतमः इति—इति । तदुक्तम्—

यद्येकत्वासितादिवत्—इति ।

एव चाशङ्क्य परिहृतम्—युक्तं नीले तत्र नीलो गुणः प्रकर्षाप्रकर्षादिभेदभिन्नस्तरवादिभिर्विशेष्यते । सत्ताजातिस्तु घटादिजातिशून्या स्वात्मविशिष्टं पदार्थं प्रतिपादयन्ती नैव घटत्वादीनाकाङ्क्षतीति न तत्र विशेषणाभिधानं भवति । तदुक्तम्—

नैतज्जातेरजातितः । इति ।

तदेतदपि समानम् । तत्रापि ह्यसदपोहे नैवाघटापोहोऽस्ति । अतश्चात्मन्यविद्यमानमघटापोहमसदपोहो नाक्षेप्तुं समर्थ इति तैर्न घटापोहैर्विशेष्यते । यथा नीलापोहः स्वगतैरप्रकर्षापोहैर्विशेष्यते । तदेतत् सर्वमाह—

नात्मन्यविद्यमानत्वाद्विशेषोऽपोहसूचकः ।
तस्मान्न तैर्विशेष्यत्वं प्रकृष्टत्वेन नीलवत् ॥१३२॥

इति । यत् पुनः—अशब्दवाच्यैरेव घटादिभिः सज्जात्याक्षिप्तैर्विशेषणादिव्यवहारो भविष्यति—इत्याशङ्क्य भिक्षुणा दूषितम् — अनैकान्तिको घटाक्षेपः पटेऽपि संक्रान्तिसंभवात्—इति । तदुक्तम्—

अर्थाक्षेपोऽप्यनैकान्तः—इति ।

तदेतदपि ह्यसदपोहोऽनैकान्तिको धूमवदग्निं घटापोहमाक्षेप्तुं समर्थ इत्याह—

अर्थाक्षेपोऽपि नास्त्येव सन्देहाल्लिङ्गलिङ्गिवत् ।

इति । अनैकान्तिकत्वमेव प्रकटयति—

न सामान्यात्मनापोहस्तैर्विना न च सिध्यति ॥१३३॥

इति । किं चायमपरस्त्वदीये पक्षे दोषः येनानुच्छरूपेणापोहे वस्तुमात्राक्षेपोऽपि न सिद्ध्यति तद्रूपस्य शशविषाणेऽपि संभवात् । तेन दूरोत्सारितमेव विशेषसूचनमित्याह—

एवमेव त्वनाक्षेपः स्यादपोहेन वस्तुनः ।
यतः शशविषाणेऽपि तदपोहस्य संभवः ॥१३४॥

इति । किंच अयमसदपोहोऽवस्तुरूपः । न तस्य लिङ्गसंख्यादियोगोऽस्ति । ततश्चैकवचनादिव्यवहारोच्छेदस्त्वदीये पक्षे प्राप्त इत्याह—

लिङ्गसंख्यादिसंबन्धो न चापोहस्य विद्यते ।

इति । ननु सामान्यवादिनोऽपि तुल्यमेतत् । तदपि ह्यलिङ्गसंख्याकम् । सत्यमेवैतत् केवलं तस्य तदाश्रितव्यक्त्यभिप्रायेण सिद्ध्यति । तत्र तु तस्या अव्यपदेश्यत्वात्तदपि नास्तीत्याह—

व्यक्तेरव्यपदेश्यत्वात्तद्द्वारेणापि नास्त्यसौ ॥१३५॥

इति । न च स्वरूपेणापारव्यपदेश्यापोहरूपेण व्यपदेश्येति शक्यमेव वक्तुम् । साधारणस्वरूपतस्तस्याविशेषादित्याह—

न ह्यसाधारणत्वेन सापोहेनापि गम्यते ।

इति । न चाप्रतीयमानस्य विशेष्यस्य सत्तामात्रावच्छिन्नस्य किंचिद्विशेषणं दृष्टमित्याह—

न चाप्यगम्यमानस्य वस्तुनः स्याद्विशेष्यता ॥१३६॥

इति । अत्र भिक्षुणोक्तम्—किंचित् कुत्रचिद्वर्तमानमुपकारमासजद्वर्तते । यथा लाक्षा स्फटिकेऽनुरञ्जनोपकारेण वर्तते । वर्तते चेज्जातिर्द्रव्ये तया तस्यानुरञ्जनाद्युपकारः कर्तव्यः । ततश्च जातिबुद्ध्या विनैव तदुपकृतद्रव्यमात्रप्रतीत्या

भवितव्यम् । न हि लाक्षारक्ते स्फटिके गृह्यमाणे तद्ग्रहणमपरमपेक्षते । न चैव-मत्रास्ति । तेन नास्त्युपकारको द्रव्यवृत्तिः—इति । तदुक्तम्—

गुणोपकारतो द्रव्ये प्रकर्षः स्याद्विना धिया । इति ।

तदयुक्तम् । नोपकारकत्वं स्वरूपेणोपकर्तुमशक्तानाम् । कथं तदुपकार्यत्वं वस्तुनो भविष्यति । कथं च तद्द्वारेण तत्र वृत्तिः—इत्यभिप्रायेणाह—

लिङ्गसंख्याद्यपोहानां नोपकारः स्वरूपतः ।
वस्तुनश्चोपकार्यत्वं कथं शब्दैः प्रतीयते ॥१३७॥

इति । किञ्चैतद्वो दर्शनम्—यावान् कश्चित् प्रतिषेधः स सर्वोऽनुपलब्धेः—इति । ततश्चापोहस्याप्यन्यनिषेधरूपस्य तथैव प्रतीत्या भाव्यम् । न चैतदस्ति भावरूपप्रतीतेरित्याह—

न विनानुपलब्ध्या च स्यादभावमतिः क्वचित् ।
न चाभावप्रमेयत्वं गोत्वादेरवगम्यते ॥१३८॥

इति । किञ्च पचत्यादिशब्देभ्योऽन्यव्यवच्छेदेनार्थे प्रतीयमाने ये ते व्यवच्छेद्यास्ते बुद्धावारोपयितव्याः । न च निर्विकल्पकायां तस्यामारोप-यितुं शक्यन्ते । सविकल्पका च शब्दमन्तरेण न संभवति । शब्दस्तु पचति-व्यतिरेकेणापचतिरेव भवति । न चासावीदृशोऽर्थप्रतिपादको दृष्ट इत्याह—

आख्यातेषु न चान्यस्य निवृत्तिः संप्रतीयते ।
न पर्युदासरूपं हि निषेध्यं तत्र विद्यते ॥१३९॥

इति । पर्युदासरूपा अपचतयोऽभिधेयनिषेधेन पचतीत्यादयो ग्रही-तव्याः । न च ते सन्तीत्यर्थः ।

यदि तु—न पचति—इत्येवं पचतिव्यतिरेकेणासौ ग्रहीतुमिच्छेत् ततोऽन्य एवार्थः प्रतीयेत—पाकं न करोति—इति । न पुनः पचत्यभिधेयव्यतिरेकि-णोऽन्ये प्रतीयन्ते । ततश्च पुनरपि नञि तत्र प्रयुज्यमाने प्रतिषेध्यप्रतिषेध एव प्रतीयते नापचतिव्यतिरेक इत्याह—

**न नेति ह्युच्यमानेऽपि निषेधस्य निषेधनम् ।**
**पचतीत्यनिषिद्धं तु स्वरूपेणावतिष्ठते ॥१४०॥**

इति । भवतु नामापचतिव्यतिरेकेणात्र प्रत्ययः । स त्वभावरूपो युज्यते अन्यव्यवच्छेदरूपत्वात् । यः पुनरयं साध्यत्वादिप्रत्ययः स निरालम्बनो वक्तव्यः । न चैतद्युक्तमित्यभिप्रायेणाह—

**साध्यार्थप्रत्ययश्चात्र तथा भूतादिरूपणम् ।**
**निष्पन्नत्वादपोहस्य निर्निमित्तं प्रसज्यते ॥१४१॥**

इति । अनेनैव न्यायेन लिङ्प्रत्ययप्रतिपाद्ये विध्याद्यर्थे पर्युदसनीयस्य दर्शयितुमशक्यत्वात्तत्प्रतिषेधरूपोऽपोहो न संभवति नञ्द्वययोगेऽपि प्रतिषेधप्रतिषेधात् पूर्ववदेव नास्त्यपोहप्राप्तिरित्याह—

**विध्यादावर्थराशौ च नान्यापोहस्य दर्शनम् ।**
**नञश्चापि नञा युक्तादपोहः कीदृशो भवेत् ॥१४२॥**

इति । तथा चादीनामपि निपातोपसर्गाणामर्थं प्रतिपादयतां तद्व्यतिरेकिणो न अचादयो नाम ग्रहीतुं शक्यन्ते यद्व्यवच्छेदेनापोहो भविष्यतीत्याह—

**चादीनामपि नञ्योगो नैवास्तीत्यनपोहनम् ।**

इति । किञ्च अपोहः शब्दार्थ इत्यभिहितम् । शब्दश्च पदात्मकः । स च चतुर्विधोऽपि नापोहप्रतिपादक इत्युक्तम् । वाक्यात्मकोऽपि न तं प्रतिपादयतीत्याह—

**वाक्यार्थेऽन्यानिवृत्तिश्च व्यपदेष्टुं न शक्यते ॥१४३॥**

इति । विशिष्टार्थबुद्धिजनकं हि वाक्यम् । तत्र न किंचिदेकमस्ति येन नञः संबन्धं कृत्वा तत्प्रतिषेधद्वारेणापोहो भविष्यतीत्यर्थः ।

किञ्च यदान्यापोहेन शब्दोऽर्थं प्रतिपादयति तदानन्यापोहशब्दः किं प्रतिपादयतु । स ह्यन्यापोहव्यवच्छेदं कुर्वन् विधिरूपार्थाभिधायी च दृश्यते । न त्वदीये पक्षे तत् संभवतीत्याह—

**अनन्यापोहशब्दादौ वाच्यं न च निरूप्यते ।**

इति । किंच प्रमेयज्ञेयशब्दादयोऽप्यप्रमेयाद्यपोहेन वर्तन्ते इत्यभ्युपगमनीयम् । न चाप्रमेयं नाम किंचिदस्ति अभावस्यापि तद्रूपत्वाभ्युपगमात् । अतः किंपर्युदासेन किं प्रतिपाद्यतामित्यभिप्रायेणाह—

**प्रमेयज्ञेयशब्दादेरपोह्यं कुत एव तु ॥१४४॥**

इति । नन्वेवमादिषु हि दिङ्नागेनोक्तम्—अज्ञेयं तु कल्पितं कृत्वा तदपोहेन ज्ञेयशब्दः प्रवर्तते—इति । सत्यमुक्तम् । अयुक्तं हि तत् । एवं सति किमपरमनेन ग्रहणेन । यत् कल्पिताकारनिषेधनाकल्पितरूपं वाच्यमिति ततो वरमेवमुक्तं स्यात्—विधिमुखेनैव कल्पितरूपं वस्त्वभिधीयते—इति । तदेतदाह—

**अपोह्यकल्पनायाश्च वरं वस्त्वेव कल्पितम् ।**

इति । तत्रेदं वाच्यमापतति—विज्ञानमेवेदं ज्ञेयत्वादिरूपं स्वांशग्राहकमन्यव्यवच्छेदरूपमुत्पद्यते—इति । तत्र च स एव परिहारः । निषिद्धोऽयमर्थः स्वांशालम्बनाः प्रत्यया इति । तदेतदाह—

**ज्ञानाकारनिषेधाच्च नान्तरार्थाभिधेयता ॥१४५॥**

इति । अभ्युपगम्यापि स्वांशालम्बनत्वमपोहवाचोयुक्तिरनुपपन्नैवेत्येतदप्युक्तम्—

बुद्ध्यन्तराद्व्यवच्छेदः ।

इत्यादिनेत्याह—

**न चाप्यपोह्यता तस्मान्नापोहस्तेषु सिध्यति ।**

इति । न केवलमज्ञेयं कल्पितं कृत्वा ज्ञेयादिशब्दाः प्रवर्तनीयाः । एवमित्यादिशब्दानामपि—अनेवम् — इत्यादिव्यवच्छेद्याभावेन कल्पनीयमेवापोह्यमित्यभिप्रायेणाह—

**एवमित्यादिशब्दानां न चापोह्यं निरूप्यते ॥१४६॥**

इति ।

चादीनामपि ।

इत्यत्र चादीनां नञ्योगाभावेनापोह्यप्रतिपादनासामर्थ्यमुक्तम् । अत्राभ्युपगम्य

नव्योगं तद्वाच्यापोह्याभावेन तत् काल्पनिकमपह्नीकर्तव्यमित्यभिप्रायेणापोन-रुक्त्यम् ।

अत्र भिक्षुणा पलाशः शिंशपेति सामानाधिकरण्यं न भवतीति दर्शयतोक्तम्—

भेदो भेदान्तरार्थं तु विरोधित्वादपोहते—इति ।

भेदशब्दा हि पलाशशिंशपादय एकं वृक्षत्वसामान्यमन्योन्यमपहृत्य राज्यमिव राजपुत्राः स्वविषये स्थापयन्तः परस्परविरोधिनो वर्तन्ते । तेनैकापोहेनैकः प्रवर्तमानः कथं तेन सामानाधिकरण्यं लभतामित्यर्थः । तदेतदयुक्तम् । न हि भवता पूर्वं विधिमुखेन शिंशपा वृक्षत्वं स्वीकुर्वती पलाशादीनपोहमाना दृष्टा । अपि तु यतः शिंशपाशब्दात् पलाशादयो न प्रतीयन्ते तस्मात्तैः सहास्य विरोध इति कल्प्यते । तत्र यदि विरोधबलेनैव तदपोहनमित्युच्यते ततो व्यक्तमन्योन्याश्रयं प्राप्नोतीति । तदेतदाह—

**विरोधित्वेन भेदानामपोहो यदि कल्प्यते ।**
**विरोधोऽपोहतस्तत्र विरोधाच्चाप्यपोहनम् ॥१४७॥**

इति । ततश्च शिंशपा यदा विधिमुखेन वृक्षत्वं सामान्यं नापहरति न स्वीकरोति तदा शब्दमात्रेण यथा पलाशादीनपोहते तथा वृक्षत्वमपि किमिति नापहरति नापोहते इत्याह—

**न सामान्यापहारित्वं विधिरूपेण तत्र ते ।**
**पलाशादीनपोह्यातो वृक्षं हरति शिंशपा ॥१४८॥**

इति । अन्यस्त्वाह—यदि शिंशपा विधिमुखेनैव वृक्षत्वमात्मसात् कुर्यात् ततः पलाशादीन् अपोह्य पलाशादेर्वृक्षमाच्छिनत्ति शिंशपेति शक्यते वक्तुम् । यदा पुनरेवं नास्ति तदा कथमेकसामान्यापहारनिमित्तो विरोधः—इति । नह्यनपहृतराज्या राजपुत्राः प्रथममेव विरुध्यन्ते इति शक्यते वक्तुम् । एवं चानपहृतसामान्या शिंशपा न पलाशादिना विरुध्यते । अतश्च नापोह इत्यभिप्रायः । भेदश्चैवं कर्तव्यः । न सामान्यापहारित्वं विधिमुखेन शिंशपाया विद्यते । यदि तत् स्यात् ततस्ते पलाशादीनपोह्यात् । एवं पलाशादिभ्यो वृक्षत्वं हरत्याच्छिनत्ति शिंशपा । न त्वेतदस्तीत्यर्थः । अत्र च भिक्षुणा वृक्षः शिंशपेति सामानाधिकरण्यं दर्शयतोक्तम्—वृक्षस्तदंशरति पर्यायाणां च परस्परमनपो-

शतत्वम्। अन्यत्वेऽपि च सामान्यभेदपर्यायवाचिनां अविरोधात्—इति। तदिदमनपोहकारणमविरोधादिति नातीव युज्यते इत्याह—

**सामान्याद्यनपोहश्च नाविरोधेन कल्पते।**

इति। किमिति नावकल्पते इत्याह—

**न हि शब्दस्वरूपाणां स्याद्विरुद्धाविरुद्धता ॥१४९॥**

इति। न चार्थनिबन्धनौ विरोधाविरोधौ त्वदीये पक्षे शाब्दे व्यवहारे शक्यौ दर्शयितुं तस्य तेनास्पृश्यमानत्वादित्याह—

**न च वस्तुस्वरूपेण तस्य शब्दैरसङ्गतेः।**

इति। न च शब्दव्यापारात् पूर्वमन्येन केनचित् प्रमाणेन सा विरुद्धाविरुद्धता प्रतिपन्ना प्रत्यक्षस्य वस्तुमात्रग्राहित्वात् अपोहगतविरुद्धाविरुद्धताग्रहणासामर्थ्यात्। तत्र यदि परं शब्देन एव ग्रहीतव्या न प्रमाणान्तरानवगतेऽर्थे शब्दः प्रवर्तितुमर्हतीत्याभिप्रायेणाह—

**प्राक् शब्दव्यापृतेर्नापि सापोहानां प्रतीयते ॥१५०**

इति। किंच यदा प्रमाणान्तरेण वस्तु न प्रतिपन्नं तदायं विशेषशब्दः अयं सामान्यशब्द इत्यपि भेदो दुर्लभ एवावगन्तुमित्याह—

**अन्येनानवबुद्धेऽर्थे यदा शब्दः प्रवर्तते।**
**सामान्यात्मकता तस्य केन रूपेण गम्यताम् ॥१५१**

इति। यदि पुनरर्थमनादृत्य स्वरूपभिन्नो गोशब्दोऽश्वशब्दमपोहते इत्युच्यते ततो वृक्षशब्दोऽपि कस्मात्तरुशब्दं नापोहते इत्याह—

**शब्दानुरूपतश्चेत् स्यादन्यापोहनिरूपणम्।**
**भिन्नत्वाद्वृक्षतर्वादेरपोहः केन वार्यते ॥१५२॥**

इति। स्यादेतत्—यदि नाम प्रत्यक्षेणापोहो न प्रतीयते अनुमानेन तु प्रतिपद्य विरुद्धाविरुद्धत्वं च तस्यावगम्य शब्दप्रयोगो भविष्यति—इति। तदप्ययुक्तम्। न हि निर्विकल्पकेऽनुमानमपि प्रवर्तते विकल्पनिमित्तसामान्याश्रयत्वात् तस्य। नापि विरुद्धाविरुद्धग्रहणसमर्थं तदित्याह—

**शब्दस्पृष्टेर्विनापोहो न च लिङ्गेन गम्यते।**
**न विरुद्धाविरुद्धत्वं तस्य लिङ्गाच्च सिध्यति ॥१५३॥**

इति। यत्पुनः—

भेदो भेदान्तरार्थं तु विरोधित्वादपोहते।

इत्युक्त्वा भिक्षुणापरं कारणमुक्तम्—

अदृष्टत्वाद्व्युदासो वा—इति।

यस्माद्भेदशब्दो भेदान्तरार्थो न दृष्टः तस्मादपोहते—इति तदयुक्तम्। निरस्तोऽयमर्थः यददर्शननिमित्तं शब्दस्य लिङ्गस्य वा प्रत्यायकत्वम्—

न चादर्शनमात्रेण ताभ्यां प्रत्यायनं भवेत्।

इत्यत्र। तदेतदाह—

**अदृष्टत्वाद्व्युदासस्तु पुरस्तादेव वारितः।**

इति। यत्पुनरस्मिन परिहारे भिक्षुणा शङ्कितम्—यद्यदर्शनेन भेदशब्दो भेदान्तरार्थमपोहते अथ कस्मात् सामान्यशब्दोऽपि भेदार्थं नापोहते। सोऽपि हि न तत्र दृष्टः एवेति। तदुक्तम्—

सामान्यं स्यात् स्वभेदनुत्। इति।

तदेव तावदपोहपक्षे दर्शयति—

**सामान्यशब्दो भेदे च नेष्यते वाचकात्मना ॥१५४॥**
**व्युदासस्तत्र दुर्वारः**

इति। यः पुनरस्यां परिचोदनायां भिक्षुणा परिहारो दत्तः—अर्थप्रकरणादिभिः सामान्यशब्दो विशेषेषु दृश्यते। अतो नास्त्यदर्शनम्—इति। तदुक्तम्—

नान्ययुक्तस्य दृष्टत्वात्—इति।

तदयमपरिहारः। यदि कथंचिद्दृष्टतया सामान्यशब्दो भेदार्थं नापोहते हन्त तर्हि क्षत्रियशब्दोऽपि शौर्यसंपन्ने ब्राह्मणे प्रयुज्यमानो दृष्ट इति सोऽपि तत्पर्युदासं न कुर्यात्। तदेतदाह—

कथंचिद्दृष्टता पुनः।
ब्राह्मणे क्षत्त्रियस्यापीत्यव्युदासः प्रसज्यते ॥१५५॥

इति। यत्पुनः परिहारान्तरं भिक्षुणा दत्तम्—इतश्च कारणात्सामान्यशब्दो भेदार्थं नापोहते। यस्मादपेक्षितो भेदः सामान्येन—इति। तदुक्तम्—

तन्मात्राकाङ्क्षणाद्भेदस्तत्सामान्येन नोज्झितः इति।

तदेतदप्यतिव्यापकत्वादसमाधानमिति। एवं हि द्रव्यवाचिना वृक्षादिशब्देन काचित् तिष्ठत्यादिका क्रियापेक्षितेति न तेन पर्युदासः स्यात्। तदेतदाशङ्क्याह—

आकाङ्क्षणात्तथात्यागस्तुल्यो द्रव्यक्रियादिषु।
वृक्षेणातोऽनपोहः स्यात्तिष्ठत्यादेरसंशयम् ॥१५६॥

इति। किंच यो यत्र न दृष्टः स चेत्तत्पर्युदासेन प्रवर्तते ततः पुरुषशब्दो राजनि न दृष्ट इति सोऽपि तत्पर्युदासेन प्रवर्तमानो गौरश्व इतिवन्न तेन सह विशेषणविशेष्यभावं यायात्—राजपुरुषः—इत्यत्र। तदेतदाह—

पुरुषस्य तथा राज्ञो व्युदासे न विशेष्यता।

इति। यदि तु—कथंचिद् दृष्टतया न पर्युदासः—इत्युच्यते तथा सति सामानाधिकरण्यमपि—नीलोत्पलम् — इतिवत् कस्मान्न भवति—राजा पुरुषः—इति। तदेतदाह—

अव्युदासत्वपक्षे च स्यान्नीलोत्पलतुल्यता ॥१५७॥

इति। राजानं तत्संबन्धिनं च व्यतिरिक्तं पुरुषमाश्रित्यैतदुक्तमिति द्रष्टव्यम्। अव्यतिरिक्तत्वे तु भवितव्यमेव सामानाधिकरण्येन—राजायं पुरुषः—इति। यत्पुनः परपक्षे विधिमुखेन शब्दे प्रवर्तमाने सर्वात्मकार्थ-ग्रहण प्राप्नोति ततश्च यथानुलोम्येन वृक्षपार्थिवद्रव्यसज्ज्ञेयशब्देभ्यश्चतुस्त्रिद्व्येक-निश्चयो भवति तथा प्रातिलोम्येनापि निश्चयेन भवितव्यम्। न च तथा दृश्यते। ज्ञेयशब्दाच्चतुर्षु सत्तादिषु सन्देहात्सच्छब्दात् त्रिषु द्रव्यादिषु द्रव्य-शब्दात् द्वयोः पार्थिववृक्षत्वयोः पार्थिवशब्दादेकत्र वृक्षत्वे। तस्मान्न विधि-मुखेन प्रवृत्ताः शब्दाः—इति। तदुक्तम्—

वृक्षत्वपार्थिवद्रव्यसज्ज्ञेयाः प्रातिलोम्यतः ।
चतुस्त्रिद्व्येकसन्देहे निमित्तं निश्चयोऽन्यथा ॥ इति ।

तदेतदनुभाषते—

**वृक्षत्वपार्थिवद्रव्यसज्ज्ञेयेषु यदुच्यते ।**
**प्रातिलोम्यानुलोम्येन विधौ सर्वार्थबोधनम् ॥१५८॥**

इति । एवमनुभाष्य दूषयति—

**तदयुक्तं न सर्वो हि शब्दः सर्वत्र दृश्यते ।**

इति । अयमभिप्रायः—मम हि सभागं वस्तु । भागावलम्बी च शब्दः । अतो नास्ति सर्वात्मकवस्तुग्रहणप्रसङ्ग इति । यदि तु यत्र ज्ञेयत्वं तत्र कदाचित् सत्ताद्यप्यस्ति सापि किमिति न प्रतिपाद्यते इत्युच्यते तदयुक्तम् । एवं सति यत्र रूपं तत्र कदाचिद्रसादयो भवन्तीति नेत्रेणापि तत्र प्रवर्तितव्य स्यात् । तदेतदाह—

**देशाविभागतो वृत्तिर्नेत्रस्यापि रसादिषु ॥१५९॥**

इति । यदि पुनस्तत्र समानदेशत्वेऽपि ग्राहकसामर्थ्यबलेन चक्षुरादीनां नियतवृत्तित्वमुच्यते तच्छब्देऽपि समानम् । अतो नास्त्येकग्रहणे परग्रहणमङ्कर इत्याह—

**ग्राहकत्वेन वृत्तिस्तु प्रतिजातिव्यवस्थिता ।**
**चक्षुरादिवदेवात्र सङ्करो न भविष्यति ॥१६०॥**

इति । ननु यदि भागावलम्बी शब्दो न तर्ह्यानुलोम्येनापि वृक्षशब्दात् पार्थिवत्वादिनिश्चयः स्यात् । नापि सच्छब्दाज्ज्ञेयत्वनिश्चयः । एवमानुलोम्येन परस्ताद्गमनेन सत्यैकाग्रूना प्रतीतिः । प्रातिलोम्येनाप्येकाधिका प्रतीतिर्दर्शयितव्या । तदेतत्सर्वमाशङ्क्य परिहरति—

**निवृत्तचेष्टे शब्दे च व्याप्त्यव्याप्तिकृतं पुनः ।**
**सत्त्वादेर्बोधकत्वं स्यादेकन्यूनातिरेकतः ॥१६१॥**

इति । अयमभिप्रायः—येयं प्रातिलोम्येनानुलोम्येन च प्रतीतिरुपन्यस्ता नेयं शब्दनिबन्धना । किं तर्हि शब्दप्रतिपादितार्थव्याप्त्यव्याप्तिनिबन्धना ।

तस्मादयमपि न दोषः—इति । प्रत्युतायमशेषात्मकवस्तुग्रहणप्रसङ्गो भवत एव युज्यते यस्य तेऽन्यव्यावृत्त्या विशेषो गृह्यते ।

नचान्ततो भिन्नाः परव्यावृत्तयः । तेनैकव्यावृत्तिविशिष्टे वस्तुनि गृह्यमाणे समस्तव्यावृत्तिविशिष्टग्रहणं प्राप्नोत्येवेत्याह—

तवैव दोषः स्यादेष विशेषे यस्य वर्तते ।
सामान्यशब्दो वाच्यानां भेदो नास्त्येव वस्तुतः॥१६२

इति । अत्र भिक्षुणापोहपक्षे जातिपक्षतुल्यत्वमभिदिष्टम् । यथाह—

जातिधर्मव्यवस्थितिः—इति ।

जातिधर्माश्चैकत्वनित्यत्वप्रत्येकपरिसमाप्तिलक्षणा अत्रैव तिष्ठन्तीत्यर्थः । ते इमे वस्तुधर्मा अवस्तुन्यतिदिश्यमाना असूत्रपटकारित्वं सूचयन्तीत्याह--

अपि चैकत्वनित्यत्वप्रत्येकसमवायिताः ।
निरुपाख्येष्वपोहेषु कुर्वतोऽसूत्रकः पटः ॥१६३॥

इति । तेन यद्यवश्यमपोहो वक्तव्यः ततो विषयं निरूप्योच्यताम् । स च विषयो यत्रान्यनिषेधका नञादयः प्रयुज्यन्ते । यत्र तु ते न सन्ति तत्र वस्तुरूपमेवाभिधेयम् । तदेतदाह—

तस्माद्येष्वेव शब्देषु नञ्योगस्तेषु केवलम् ।
भवेदन्यनिवृत्त्यंशो वस्त्वेवान्यत्र गम्यते ॥१६४॥

इति । यत् पुनर्न्यायविस्तरविदापोहनिरसनायानुमानमुपन्यस्तं तदयुक्तमिति मन्वानो दूषणाभिधित्सयोपन्यस्यति---

ज्ञेयार्थान्यानपोहत्वं प्रमाङ्गत्वात्त्वगादिवत् ।

इति । गोशब्दो धर्मी स्वप्रतिपाद्यात् सास्नादिमतोऽर्थादन्यन्नापोहते इति साध्यो धर्मः । परिच्छित्तिसाधनत्वादिति हेतुः । यद्यत् परिच्छित्तिसाधनं तत्तत् स्वप्रतिपाद्यादन्यन्नापोहते त्वगादिवत् इति दृष्टान्तः । एवमनुमानमुपन्यस्य हेतुमनैकान्तिकत्वेन दूषयन्नाह—

येनोक्तं तस्य नञ्युक्तैः शब्दैः स्याद्व्यभिचारिता ॥१६५

इति। नञ्योगिनो हि शब्दाः परिच्छित्तिसाधनाः सन्तोऽप्यन्यव्यवच्छेदेन स्वप्रतिपाद्यमर्थं प्रतिपादयन्तीत्यनैकान्तिकत्वम्।

यदि पुनरनैकान्तिकत्वपरिहाराय नञ्योगिनोऽपि शब्दान् पक्षीकरोति तेऽपि हि स्वरूपेणैव वस्तु प्रतिपादयन्तीति मन्यमानः ततोऽप्यावीतहेतुभिरनैकान्तिक इत्यक्षरचतुष्टयाधिकेनार्धश्लोकेनाह—

पक्षीकुर्याद्यदा सर्वांस्तदाप्यावीतहेतुभिः।
अनैकान्तः

इति। ये हि विपक्षव्यतिरेकेणैवार्थं प्रतिपादयन्ति तेऽवावीतहेतवोऽभिधीयन्ते। यथा प्राणादयो निरात्मकेभ्यो घटादिभ्यो निवृत्ताः जीवच्छरीरे दृश्यमानास्तद्व्यवच्छेदेन सात्मकत्वमवगमयन्तीत्यर्थः। किंच नञ्योगिनः शब्दा नान्यव्यवच्छेदेनार्थं प्रतिपादयन्तीति प्रतीतिविरुद्धोऽप्ययं पक्ष इत्याह—

विरोधश्च सर्वलोकप्रसिद्धितः ॥१६६॥

इति। किंच अन्यानपोहकत्वमिति कोऽर्थः। किमन्यापोहं न करोतीति अपोहकर्तृत्वं शब्दस्य निषिध्यते किं वापोहरूपा पश्चाकारां प्रतीतिं न करोतीति। उभयथापि च सिद्धसाध्यत्वम्। अपोहस्यावस्तुरूपत्वेनाक्रियमाणत्वात् अमूर्तस्य च शब्दस्य कर्तृत्वायोगात् वस्त्वाकारबुद्ध्युत्पत्तेश्च। तदेतत् सर्वमाह—

नापोहत इतीदं च कारकत्वेन चेद्भवेत्।
केवलापोहबुद्धेर्वा ततः स्यात् सिद्धसाध्यता ॥१६७॥

इति। अथायमर्थः—अन्यापोहे न वर्तते अन्यापोहविशिष्टे न प्रवर्तते—इति। ततः पुनः पूर्वपरिकल्पितस्य पक्षस्य बाधः स्यात्। एवं हि पूर्वमुक्तम्—गोत्वमश्वाद्यभावविशिष्टम्—इति। ततश्च गोत्वे गोशब्दो वर्तते। अन्यापोहवति न वर्तते इति विरुद्धमेवेति स्वयमेवाशङ्क्य दर्शयति—

अथान्यापोहवत्यर्थे वृत्तिर्नास्तीति साध्यते।
ततः प्राक्पक्षबाधः स्याद्गोत्वेऽप्यश्वाद्यभावतः॥१६८

इति। ईदृशे च पक्षे दृष्टान्तोऽपि साध्यविकलः स्यात्। चक्षुरादीनामप्यन्यापोहविशिष्टवस्तुनि वर्तमानत्वात्। यदि परमेवं ते न प्रतिपादयन्ति—अगौरयं न भवति—इति वस्तुवृत्त्या त्वगौरसौ न भवत्येवेत्याह—

साध्यहीनश्च दृष्टान्तश्चक्षुराद्यपि तस्य हि।
वर्ततेऽपोहवत्येव तं यद्यपि न बुध्यति॥१६९॥

इति। यदि पुनः—अन्यापोहोऽयम्—इत्येवमाकारा बुद्धिर्नोत्पद्यते इत्युच्यते ततः पुनरपि सिद्धसाधनम्। अपोहरूपमप्येतत्—गौः—इत्येवं प्रतीयते न—अन्यापोहः—इत्येवम् इति स्वयमेवाशङ्क्याह—

अथान्यापोहनिर्भासा न बुद्धिः सिद्धसाधनम्।
अपोहरूपमप्येतद्वस्त्वित्येवं हि गम्यते॥१७०॥

इति। अथान्यापोहकृत्त्वं शब्दस्य नास्तीति कोऽर्थः। नान्यार्थप्रवृत्तावपोहो निमित्तमिति। तदयुक्तम्। अन्वयव्यतिरेकाभ्यां शब्दोऽर्थं गमयतीत्युक्तं तदिदानीमन्यथोच्यमानमभ्युपगमविरोधं करोतीत्याह—

अथापोहनिमित्तास्य वृत्तिरर्थे निषिध्यते।
व्यतिरेकाङ्गतेष्टत्वात् पुनः प्राक् पक्षबाधनम्॥१७१

इति। अनैकान्तिकश्च हेतुः स्यात्। परिच्छित्तिसाधनस्यापि धूमादेरनग्निव्यावृत्तिनिमित्ताग्निप्रतिपादनदर्शनादित्याह—

अनुमाने तथा चैतदित्यनैकान्तिको भवेत्।

इति। किंच—स्थाणुर्वा पुरुषो वा—इत्यादिसन्देहं बाधमानं यदुत्पद्यते प्रत्यक्षं ज्ञानम्—नायं स्थाणुः पुरुषोऽयम्—इत्यादि तेनापि पुरुषपरिच्छित्तिसाधनेन स्थाणुव्यतिरेकनिमित्तेनानैकान्तिक इत्याह—

सन्देहबाधजातेन प्रत्यक्षेणापि चेतसा॥१७२॥

इति। किंच इष्टविघातकारी चायं हेतुः प्रमाणत्वादिति। तथाहि—शब्दो ह्यात्मादीनां वाचकोऽभीष्टः। तत्र चैवं वक्तुं शक्यम्—नात्मादीनां शब्दो वाचकः प्रमाणत्वात् श्रोत्रादिवत्—इति। तदेतदाह—

विरुद्धता च हेतोः स्याच्छब्दः श्रोत्रादवद्यतः।
आत्मान्तःकरणाकाशस्ववाचित्वं जहाति च ॥१७३॥

इति। कः पुनरत्र शब्दोऽन्तःकरणादिवाचकत्वेन निषिध्यते। यदि शब्दमात्रं ततोंऽशे सिद्धसाध्यत्वम्। यदि गोशब्दः तथापि सिद्धसाध्यतैव। अथ बुद्ध्यादिशब्दः ततो लोकविरोधित्वम्। उच्यते—सत्यमेवैतत् केवलमयं लोकविरोधो नञादीनामन्यापोहप्रतिषेधेऽपि तुल्य इत्युपेक्षितव्य इति मन्वानेनैतदुक्तमिति द्रष्टव्यम्।

विरुद्धाव्यभिचार्यप्ययं हेतुरित्याह—

विधिरूपप्रवृत्तिर्वा शब्दोऽपोहेन वर्तते।
अनुमानाङ्गभूतत्वाद्यथैव प्रतिषेधकः ॥१७४॥

इति। यो भवतां विधिरूपप्रवृत्तिः शब्दोऽभिमतः सोऽन्यापोहेन वर्तते अनुमानज्ञानकारणत्वात्। यद्यदनुमानज्ञानकारणं तत्तदन्यापोहेन वर्तते व्यतिरेकदृष्टान्तप्रतिपादकशब्दवदित्यर्थः। विरुद्ध एवायं हेतुरित्याह—

जातिं वा न ब्रवीत्येष व्यक्तिं वा तद्विशेषिताम्।
प्रमायामङ्गभूतत्वात्त्वक्छ्रोत्रादि यथैव च ॥१७५॥

इति। तदेवमनैकान्तिकत्वादिदोषाणामनुमानगम्य एवायमर्थो न भवति। अतोऽत्रानुमानोपन्यासो वृथैव कृतः। कारणं त्वत्तावदेव वाच्यम्—विधिरूपेणैव लोकेऽर्थोऽवगम्यते। तस्मात्तथैव प्रतिपादयति नान्यापोहेन—इति। तदेतदाह—

एवं साधनमार्गेण वाच्यावाच्यनिरूपणम्।
नावतिष्ठत इत्येवं कथ्यते लोकवर्त्मना ॥१७६॥

इति भट्टपुत्रजयमिश्र विरचितायां श्लोकवार्तिकव्याख्यायां
शर्करिकायां अपोहवादः।

# वनवादः

एवं सामान्यं स्वाभिप्रेतं समर्थयित्वा पराभिप्रेतं च दूषयित्वा भाष्यमिदानीं व्याचष्टे । तत्र भाष्यम्—सास्नादिविशिष्टा आकृतिरिति ब्रूमः—इति । तदेतदनुपपन्नम् । न ह्यसमवायि विशेषणं भवति । न च गोत्वं सास्नाद्यवयवसमवेतम् । अपि तु तदारभ्येऽवयविनि । तस्मान्नास्ति सास्नादिविशिष्टत्वमाकृतेरित्याक्षिपति—

**सास्नादिभिर्विशिष्टत्वमाकृतेरुच्यते कथम् ।**
**यदावयविसंबद्धं गोत्वं नावयवे स्थितम् ॥१॥**

इति । अत्र समाधिः—

**एकावयविसंबन्धस्तेषां गोत्वे न विद्यते ।**
**तेनासाधारणत्वात्ते स्युर्गोत्वस्योपलक्षणम् ॥२॥**

इति । अयमर्थः—नात्र विशिष्टत्वाचोयुक्तिर्विशेषणविशेष्यत्वाभिप्रायेण । किं तर्हि । उपलक्षणत्वाभिप्रायेण । तच्च संबन्धमात्रनिबन्धनम् । अस्ति च सास्नादीनामेकार्थसमवायलक्षणः संबन्धः इति भवन्ति ते तस्यासाधारण्येनोपलक्षणमिति ।

असाधारणत्वादिति यदुक्तं तदेवेदानीं प्रकटयति—

**पिण्डे सत्तादिजातीनां बह्वीनां समवेतता ।**
**ताभ्यो विशेष्यते गोत्वं सास्नादिभिरसंशयम् ॥३॥**

इति । उपलक्षणत्वमेवैतेषामुचितं प्रकारान्तरासंभवात् । तथाहि—न तावदिमे व्यञ्जकाः नापि विशेषणम् । केनान्येन प्रकारेण गोत्वसंबन्धिनः स्युरित्यभिप्रायेणाह—

**न चैते व्यञ्जकास्तस्य गुणवद्वा विशेषणम् ।**

इति । प्रतिज्ञाद्वयेऽपि कारणमाह—

तथाहि नागृहीतेषु तेषु स्याद्गोत्वबोधनम् ॥४॥

इति । न ह्यगृहीते प्रदीपादौ व्यञ्जके ह्यगृहीते च विशेषणे नीलादौ तदभिव्यङ्ग्यस्य घटादेस्तद्विशिष्टस्योत्पलादेर्ग्रहणं दृष्टमित्यभिप्रायः ।

व्यञ्जकाङ्गीकरणे चायमपरो दोषः—सास्नादेरपि सामान्यात्मकत्वात्तदभिव्यञ्जकमपरमपेक्षितव्यम् । तस्यापि तदात्मकत्वात् अभिव्यञ्जकान्तरापेक्षणम् । एवं तावद्गन्तव्यं यावदेव सामान्यात्मकमभिव्यञ्जकं गृहीतम् । न च तत्तथा लब्धव्यम् । अतश्चाप्रतीतिरेव गोत्वस्य प्राप्नोतीति । तदेतदाह—

तेषां च व्यञ्जकत्वे स्यात् पुनर्ग्रहणकल्पना ।
तथा सत्यनवस्थानान्न स्याद्गोत्वावधारणम् ॥५॥

इति । आस्तां तावदनवस्था । यदा समस्ताः सास्नादयो व्यञ्जका भण्यन्ते तदा तत्सामर्थ्यग्रहणपूर्वकेणैव गोत्वग्रहणेन भवितव्यम् । न च तच्छक्यमनन्तेष्वन्येन्द्रियग्राह्येषु युगपद्बुद्ध्यनुत्पत्तेः । एकैकग्रहणे च सामस्त्यायोगादित्यभिप्रायेणाह—

सर्वेषु च गृहीतेषु सास्नादिषु भवेन्मतिः ।
गोत्वेन चैषु सर्वेषु युगपद्बुद्धिसंभवः ॥६॥

इति । तस्माद्यथा सद्भावमात्रेणावयवा महत्त्वादिबुद्धिं पिण्डे जनयन्ति तथा जातिगुणबुद्धिमपि । अतो नाभिव्यञ्जका इत्युपसंहरन्नाह—

तस्मात् सद्भावमात्रेण महत्त्वादिवदेव धीः ।
क्रियतेऽवयवैः पिण्डे तथा जातिगुणादिषु ॥७॥

इति । ननु यदि नाभिव्यञ्जकाः नापि विशेषणं सद्भावमात्रेणैव च गोत्वप्रतिपत्तिं कुर्वन्तीत्युच्यते किमिति व्यवहितस्था गोत्वं न प्रतिपादयन्तीति चोदयन्नाह—

यद्येवमगृहीतेषु तेषु किं सा न जायते ।

इति । अगृहीतेष्वन्यदेशवर्तिष्वित्यर्थः । सिद्धान्तवादी तु सास्नाद्यारब्धस्यावयविनो गोत्वरूपत्वात् कुतोऽन्यत्र तद्बुद्धिप्रसङ्ग इत्याह—

**तद्बुद्धिव्यतिरेकेण ग्राह्यं येन न विद्यते ॥८॥**

इति। यच्चैतदस्माभिरुक्तम्—अगृहीतेष्वेव सास्नादिषु गोत्वप्रतीतिर्भवति—इति तत् सामस्त्यग्रहणाभावाभिप्रायेण। अस्त्येव तु समानेन्द्रियग्राह्याणां केषांचित् तेषां समानदेशतया प्रतीतिरित्याह—

**गृह्यमाणे तु गोत्वादौ नान्तरीयकहेतुकः।**
**सास्नादेः कस्यचिद्बोधस्तद्देशत्वेन जायते ॥९॥**

इति। यदि वा मुख्यमेव सास्नादिविशिष्टत्वमाकृतेः पिण्डाव्यतिरेकित्वात् तस्याः पिण्डस्य च सास्नाद्यवयवाव्यतिरेकित्वादित्यभिप्रायेणाह—

**तदनत्यन्तभेदाद्वा तद्विशिष्टेति कीर्त्यते।**

इति।

सास्नाद्येकार्थसंबन्धी।

इत्यादिना च सहास्यापौनरुक्त्यं विस्पष्टमेवास्मद्व्याख्यानेनेति नातीव प्रपञ्चितम्। अत्र भाष्यम्—न प्रत्यक्षा सती साध्या भवितुमर्हति—इत्यादि। तन्निरभिप्रायमिव दृश्यते। का नामेयं प्रत्यक्षेऽर्थे विप्रतिपत्तिः यदर्थमिदमुक्तमित्याशङ्क्य साभिप्रायतां दर्शयन्नाह—

**बाधः परानुमानस्य न प्रत्यक्षेति चोच्यते ॥१०॥**

इति। अयमभिप्रायः—येनैवमुक्तं नन्वाकृतिः साध्यास्ति वा न वेति तस्यायं दुष्टोऽभिप्रायः—नास्त्येवाकृतिरित्यनुमानादेव गम्यते—इति। तदन्तर्गर्भितस्यानुमानस्येदं प्रत्यक्षविरुद्धत्वमुक्तम्—इति।

किं पुनस्तदन्तर्गर्भितं परानुमानमित्याह—

**परेषां साधनं ह्यत्र नाकृतिः पिण्डतः पृथक्।**
**तद्धीहानावविज्ञानात् पङ्क्तियूथवनादिवत् ॥११॥**

इति। पिण्डव्यतिरिक्ता नाकृतिरिति तद्धाने तद्बुद्ध्यभावात्। यदग्रहे च यद्बुद्धिर्न भवति तत्ततो व्यतिरिक्तमपि न भवति मृगादिभ्य इव यूथं वृक्षेभ्य इव वनमित्यर्थः।

कस्मात् पुनर्भाष्यकारेण परोक्तस्य दूषणमुक्तम् । न पुनः स्वयमेव साधनं कृतम् । उच्यते—स हि साधनं वक्ति यस्य परोक्षं किंचिदङ्गीकृतमस्त्यलौकिकप्रायम् । प्रत्यक्षसिद्धव्यवहारिणस्तु मीमांसकस्य साधनोपन्यासावसर एव नास्ति । ये तु मूढात्मानस्तार्किकत्वाभिमानेन तदवजानते तेषां प्रत्यक्षविरोधोद्भावनमात्रमेव वाच्यम् । अतः साधु कृतं यत् स्वयं साधनं नोक्तमित्याह—

**सर्वलोकप्रसिद्धत्वान्न वाच्यं साधनं स्वयम् ।**
**निषेधतां परेषां तु विरोधं लोकतो वदेत् ॥१२॥**

इति । अत्रापरश्चोदयति—

**विसंवादो न दृश्येत यदि प्रत्यक्षताकृतेः ।**

इति । तस्याभिप्रायः—भवेत् प्रत्यक्षा जातिः यद्यत्र विप्रतिपत्तिर्न स्यात् । अस्ति तु सा । न च प्रत्यक्षप्रतिपन्ने सा युक्ता । तस्मादप्रत्यक्षैव जातिः—इति । सिद्धान्तवादी तु मन्यते—सत्यं विप्रतिपत्त्या प्रत्यक्षा न भवति । सा तु विप्रतिपत्तिः किं तार्किककुहेतुजनिता किं वा बाधकप्रत्ययान्तरजनितेति विवेक्तव्या । तत्र यदि तार्किककुहेतुजनिता ततस्तेषां सर्वप्रमाणप्रमेययोर्विप्रतिपत्तिदर्शनात् कुतः क्वचिदपि प्रतिपत्त्यङ्गीकरणम् । अतश्च सर्वोच्छेदः स्यादिति । तदेतदेव तावदाह—

**प्रमाणेऽपि विसंवादात्तार्किकेषु कुतो न्विदम् ॥१३॥**

इति । प्रमाणेऽपीत्यपिशब्देन प्रमेयविप्रतिपत्तिराक्षिप्ता । तामिदानीं दर्शयति—

**रूपादावपि तेषां हि प्रत्यक्षत्वेन सम्मते ।**
**विवादः**

इति । यदि प्रत्यक्षान्तर्गतविप्रतिपत्तिरभिधीयते सा जातौ नैव विद्यते इत्याह—

**नैव लोकस्तु जातौ विप्रतिपद्यते ॥१४॥**

इति । लोकद्वारेण प्रत्यक्षमेव वक्तीति द्रष्टव्यम् ।

प्रत्यक्षाविप्रतिपत्तिमेव व्यवहारकथनेन दर्शयति—

**व्यवहारा हि दृश्यन्ते सामान्यार्थनिबन्धनाः ।**
**दधितक्रादिदानादौ कौण्डिन्यब्राह्मणादिषु ॥१५॥**

इति । ब्राह्मणेभ्यो दधि दीयताम् । तक्रं कौण्डिन्याय—इत्येवमादिषु हि ब्राह्मणत्वकौण्डिन्यत्वनिबन्धनो व्यवहारो दृश्यते इत्यर्थः ।

अत्र केचिन्महर्षयः—अवयवसंस्थानात्मकमेव सामान्यम्—इति वदन्ति । तदयुक्तियुक्तमिह नाभिप्रेतमित्याह—

**आकृतिर्जातिरेवात्र संस्थानं न प्रकल्पते ।**

इति । किमिति पुनरेवं नावकल्पते इत्याह—

**न हि वाय्वग्निशब्दादौ किंचित् संस्थानमिष्यते॥१६**

इति । असंस्थानात्मकेषु वाय्वादिषु सामान्यप्रत्ययस्तूत्पद्यते । स त्वन्मते न स्यादित्यभिप्रायः । अत्यल्पं चेदम् । संस्थानात्मकेष्वपि शाबलेयादिषु तद्वै-सादृश्यादेकाकारप्रत्ययो न स्यादित्यभिप्रायेणाह—

**अन्यदन्यच्च संस्थानं प्रतिपिण्डं प्रतीयते ।**

इति । किं च संस्थानरूपे सामान्येऽङ्गीक्रियमाणे दर्शनहानिश्च प्राप्नोति । नित्यं हि सामान्यमभ्युपगतम् । अवयवसंयोगात्मकस्य च संस्थानस्य तद्वि-भागेन विभागादनित्यत्वं स्यात् । न चानभिव्यक्तं तिष्ठतीति शक्यते वक्तुम् । सद्भावे प्रमाणाभावात् । पिण्डान्तरे चान्यत् संस्थानमित्युक्तम् । तदेतत् सर्वमूरीकृत्याह—

**संयोगात्मकतायां च विभागेषु विनश्यति ॥१७॥**

इति । अथैवमुच्यते—यद्यपि प्रतिविषयमन्यदन्यच्च संस्थानं तथापि संस्थानत्वं तावत् सर्वसमानम् । ततश्चैकात्मना प्रत्ययो नित्यत्वं च सिध्य-त्येव—इति । तदयुक्तम् । एवं सति कर्कादिव्यक्तिष्वपि तद्भावाच्छाबलेया-दिष्विव तत्रापि गोत्वप्रत्ययः स्यात् । न चैवमिष्टम् । तदेतत् स्वयमेवाशङ्क्याह—

अथ संस्थानसामान्यमश्वादावपि तत् समम् ।

इति । अथावान्तर शाबलेयादिष्वनुगतं कर्कादिष्व्यावृत्तं संस्थानसामान्यमस्तीत्युच्यते तदयुक्तम् । न हि गोत्वव्यतिरिक्तं तदवगम्यते यतः । तदेतदाह—

न गोत्वेन विनाप्येतद्व्यवच्छिन्नं प्रतीयते ॥१८॥

इति । किंच शाबलेयादिसंस्थानरूपाः प्रायशस्तत्सदृशरूपा वा गवयादिविशेषा दृश्यन्ते । न च तत्र गोत्वबुद्धिर्भवतीत्याह—

सर्वप्रतिकृतीनां तु संस्थाने सत्यपीदृशे ।
न गोत्वादिमतिर्दृष्टा

इति । प्रतिकृतिः सदृश इत्यर्थः । तस्मादन्यत्सामान्यमन्यत् संस्थानमित्युपसंहरन्नाह—

तस्माज्जातिः पृथक् कृता ॥१९॥

इति । अत्र भाष्यकारेण रुचकादिषु जातिः प्रत्यक्षा दृश्यते इति—रुचकः स्वस्तिको वर्द्धमानक इति हि प्रत्यक्षं दृश्यते—इति यदवोक्तं तत्र कदाचित् प्रत्येकरुचकत्वादिसामान्याभिप्रायेण त्रीणि निदर्शनान्येतानि । कदाचिदेतत्त्रितयानुगतैकसुवर्णत्वाभिप्रायेणैकमेव निदर्शनमिति व्याचक्षाण आह—

रुचकादिषु सामान्यं रुचकत्वाद्युदाहृतम् ।
भिन्नेषु चैषु सामान्यं सुवर्णत्वं प्रतीयते ॥२०॥

इति । नन्वेवं सति सामान्यरूपमेव वस्तु प्रदर्शितं न स्वलक्षणस्वरूपमपि । उभयात्मकं च तदिष्यते । इत्याशङ्क्योभयात्मकत्वे सार्द्धेन श्लोकेन प्रमाणमाह—

वर्द्धमानकभङ्गेन रुचकः क्रियते यदा ।
तदा पूर्वार्थिनः शोकः प्रीतिश्चाप्युत्तरार्थिनः ॥२१॥
हेमार्थिनस्तु माध्यस्थ्यं. तस्माद्वस्तु त्रयात्मकम् ।

इति। यदि तत् सुवर्णत्वरूपमेव स्यात् ततः कस्य विनाशः स्यात् कस्य चोत्पादः येनोभयार्थिनोः शोकहर्षौ स्याताम्। न चैवं सति व्यक्त्यात्मकमेव तदङ्गीकर्तव्यं हेमार्थिना माध्यस्थ्यदर्शनात्। तस्मात् भङ्गोत्पादस्थित्यात्मकरूपत्रययुक्तं वस्तु प्रतीयते। तच्चोभयात्मकेन विना न सिध्यतीत्यभिप्रायः। यदि तूभयरूपं नाङ्गीक्रियते ततः केवलसामान्यरूपत्वे नाशोत्पादबुद्धेर्निरालम्बनत्वं केवलस्वलक्षणरूपत्वे च स्थितिबुद्धेः। न चैतद्युक्तियुक्तमित्यभिप्रायेणाह—

**नोत्पादस्थितिभङ्गानामभावे स्यान्मतित्रयम् ॥२२॥**

इति। नन्वेवं सति नाशोत्पादस्थितिबुद्धयो न प्राप्नुवन्तीति वक्तव्यम्। शोकाद्युपन्यासः क्वोपयुज्यते। तदुच्यते। सत्यमेवं वक्तव्यम्। किन्तु विनाशादिकारणत्वाच्छोकादेस्तत्कार्यकथनद्वारेण नाशादय एव दृढीकृताः कथिता इत्यभिप्रायेणाह—

**न नाशेन विना शोको नोत्पादेन विना सुखम्।**
**स्थित्या विना न माध्यस्थ्यम्**

इति। यदपि चोभयात्मकवस्त्वङ्गीकरणे परैरुक्तम्—एकरूपविनाशेऽपररूपविनाशः तदव्यतिरेकात् प्राप्नोति। अतश्चानित्यं सामान्यं प्रसज्यते—इति तदप्यनेनैव परिहृतम्। कथंचिद्विनाशात् कथंचिदविनाशात्। तेन सामान्यरूपेणाविनाशान्नित्यमेव सामान्यमित्याह—

**तेन सामान्यनित्यता ॥२३॥**

इति। एवं भाष्यकारनिदर्शितेषु रुचकादिषु सामान्यमस्तीत्युक्तम्। ये पुनरत्र बौद्धाः—निर्विकल्पकगृहीतरुचकादिस्वलक्षणपृष्ठभाविनः सामान्यप्रत्ययाः—इति वदन्ति तान् प्रतीदं वक्तव्यम्—यत्र स्वलक्षणमतिसूक्ष्मत्वान्न गृह्यते मुद्गमाषतिलादौ तत्रैकाकारबुद्धेस्तत्पृष्ठभावित्वमशक्यमित्यवश्यं सामान्यमेवालम्बनमित्युपगमनीयम्। अतश्च सिद्धं सामान्यं प्रत्यक्षमित्याह—

**मुद्गमाषतिलादौ च यत्र भेदो न लक्ष्यते।**
**तत्रैकबुद्धिनिर्ग्राह्या जातिरिन्द्रियगोचरा ॥२४॥**

इति । इदं चातिशयेनोक्तम् । स्वलक्षणपृष्ठभावित्वेऽपि तूक्त एव परिहारः । इतश्च प्रत्यक्षं सामान्यं यत सुदूरस्थितं पुरुषमात्रं प्रतीत्य तदविनाभाविषु ब्राह्मणत्वादिषु संशयाना दृश्यन्ते । यदि तु तत्र स्वलक्षणमात्रमेव प्रत्यक्षं स्यात् ततस्तदविनाभावीनि ब्राह्मणत्वादीनि न दृष्टानीति कथं तेषु सन्देहः स्यात् । भवन् वा गोत्वादावपि स्यात् । तस्मात् पुरुषत्वसामान्यमेव तत्र प्रत्यक्षगृहीतमित्यनेनाभिप्रायेणाह—

आराद्दृष्टे च पुरुषे सन्देहो ब्राह्मणादिषु ।
न स्याद्यदि न गृह्णीत सामान्य चक्षुरादिना ॥२५॥

इति । ननु यदि सामान्यं नामास्ति ततो विलीने घृते घृतत्वप्रत्ययः किमिति सहसैव न जायते । यतस्तु प्रथमं न भवति । आस्वादितरसविशेषस्य तूत्तरकालं भवति । अतोऽवगच्छामो विकल्पमात्रमेतदिति । अत्रोच्यते— कस्यचिद्ग्रहणे काचित् सामग्री भवति रूपादीनामिव चक्षुरादिः । तेन सामान्यग्रहणे कदाचित् काचित्सामग्री भविष्यति । न चैतावता तदप्रत्यक्षम् । तदेतदाह—

तस्योपलक्षणं चापि क्वचित् केनचिदिष्यते ।
रूपादीनां विशेषेण देशकालाद्यपेक्षया ॥२६॥

इति । देशकालाद्यपेक्षया रूपादीनां यो विशेषो भवति तेन किंचित्सामान्यं गृह्यते इत्यर्थः ।

रूपादीनां विशेषेण देशकालाद्यपेक्षया ।

इति यदुक्तं तत्रैवोदाहरणानि श्लोकद्वयेनाह—

सुवर्णं व्यज्यते रूपात्ताम्रत्वादेरसंशयम् ।
तैलाद्घृतं विलीनं च गन्धेन तु रसेन वा ॥२७॥
भस्मप्रच्छादितो वह्निः स्पर्शनेनोपलभ्यते ।
अश्वत्वादौ च दूरस्थे निश्चयो जायते ध्वनेः ॥२८॥

इति । पञ्च रूपादयो गुणाः पञ्चेन्द्रियग्राह्याः । तैश्च सहकारिभिरेकैकमिन्द्रियात्मप्रत्याय्यं सामान्यं निश्चिनोतीति प्रदर्शनार्थमुदाहरणबाहुल्यम् । तत्र गन्धरसाभ्यां घृतनिश्चयः ध्वाननोऽश्वादिनिश्चयश्चानुमानमिति केचिद्दूर्णयन्ति । तदयुक्तम् । गन्धादिज्ञानसंस्कृतं हि चक्षुर्ज्ञानमपरोक्षमेव घृतादि बुध्यते न पुनः परोक्षं धूमादिवाग्निम् । तस्मादयमदोषः । रूपादीनामित्यादिशब्देन पञ्चैव रूपरसगन्धस्पर्शशब्दा विवक्षिता इति कदाचित् भ्रान्तिः स्यात् । तदर्थं प्रकारवचनोऽयमादिशब्दः न प्रभृतिवचन इति दर्शयन्नुदाहरणान्तरमाह—

संस्थानेन घटत्वादि ब्राह्मणत्वादि योनितः ।
क्वचिदाचारतश्चापि सम्यग्राजानुपालितात् ॥२९॥

इति । योनितः मातापितृसंबन्धत इत्यर्थः । स पुनरयं सम्बन्धो दुरवसेयः अप्रत्यक्षत्वात् अनुमानाद्यभावाच्च । पितुरेव स कदाचित् स्यात् । न । स्त्रीणां व्यभिचारसंभवात् । मातुस्तु स्यात् । केवलं सर्वदा सा ध्यात्मन एव ब्राह्मणत्वं नाधिगता सती कथमात्मसंबन्धद्वारेण पुत्रस्य तत् प्रतीयात् । अपि च प्रतिपन्नमातापितृसंबन्धोऽपि गवादिविलक्षणमिव वृक्षत्वं वर्णान्तरविविक्तं वर्णान्तरं न प्रत्येत्येव । यत्पुनरिदमपरं किमप्यालापजालमुक्तम्—

क्वचिदाचारतश्चापि ।

इति तदतीवासंबद्धम् । देशान्तरगतदुष्टशूद्रेऽपि सम्भवात् तत्रत्यानां प्रच्छन्नचारिणाम् । तस्माद्वक्तव्योऽत्र परिहाराभिप्रायः । तदुच्यते—सत्यं वृक्षत्वमिव ब्राह्मणत्वं न प्रत्यक्षमस्ति तथापि न ब्राह्मणाब्राह्मणसङ्करः । कथम् । ब्राह्मणशब्दप्रवृत्तेरेकस्योपाधेर्विद्यमानत्वात् । न चासौ सर्वत्रास्ति । अतो यत्रासावुपाधिः स ब्राह्मणशब्दवाच्यः । नान्य इति विवेकसिद्धिः । कः पुनरसावुपाधिः । अविच्छेदेन पितृसन्ताने मातृसन्ताने च तच्छब्दप्रयोगः । तेनाविलक्षणोऽपि पुरुषो मातापितृसन्तानाविच्छिन्नप्रयुक्तब्राह्मणशब्दस्मरणलब्धब्राह्मणशब्दव्यपदेश्यत्वो वसन्ताधानादिष्वधिक्रियते । यः पुनरेवंरूपो न भवति न सोऽधिक्रियते इति विवेकसिद्धिः । सामान्यसद्भावेऽप्येतावदेव

प्रयोजनमिति नातीव तत्सद्भावेऽभिनिवेष्टव्यम्। वार्त्तिककारेणाप्ययमेव प्रकारो योनिद्वारेणोपन्यस्त इति द्रष्टव्यम्। आचारादिपालनं च स्मरणाविच्छेद-दार्ढ्यार्थमेवोपन्यस्तमिति सर्वमदुष्टम्। अत्र कश्चिदेवमाह—सत्यमिदं जाति-दृश्यते। केवलमलीका। तथाहि प्रतिपिण्डमियं समवेताङ्गीकृता। नचैकस्यैव द्विरूपत्वं संभवति। यद्धि शाबलेयमंवच्छि स्वरूपं तत् कथमपरबाहुलेयगंव-न्ध्यपि भवितु क्षम विना स्वभावान्यत्वेन। तदन्यत्वे च पदार्थान्यत्वम्। अतश्च प्रतिपिण्डं समवेता वा न भवति प्रतिपिण्ड भिन्ना वेत्यन्यतममभ्युपग-मनीयम्। प्रतिपिण्डाभेदस्त्वलीकः—इति। तदत्र प्रतिपिण्डाभावावचनं तावत् प्रत्यक्षविरुद्धमित्याह—

प्रत्येकसमवेतत्वं दृष्टत्वान्न विरोत्स्यते।

इति। प्रतिपिण्डनानात्ववचनमपि प्रत्यक्षविरुद्धमेवेत्याह—

तथा सत्यपि नानात्वं नैकबुद्धेर्भविष्यति ॥३०॥

इति। यत्पुनः—शाबलेयमंवच्छि तत् कथं बाहुलेयमवच्छ्यापि भवति—इत्युक्तं तदप्ययुक्तम्। न ह्यन्यभेदोऽन्यस्यैकरूपस्य दृश्यमानस्य भेदापादनाय क्षमः प्रत्यक्षविरोधादेवेत्याह—

न हि सम्बन्धिभेदेन स्वरूपैकत्वबाधनम्।

इति। यत्पुनः एकपिण्डसमवेतस्यापरत्राभावेनाविभुत्वं कम्—अपरत्र भावे वा सावयवत्वम्—इति तदप्ययुक्तम्। युगपत् सर्वपिण्डेषु प्रतीतिः कार्त्स्न्येन चेत्यभिप्रायेणाह—

विभुत्वावयवाभावौ प्रतिपाद्यौ च शब्दवत् ॥३१॥

इति। तदेतच्छब्देऽपि वक्ष्यति—

देशभेदेन भिन्नत्वमित्येतच्चानुमानिकम्।

इत्यत्र। तथा—

अल्पीयसापि यत्नेन शब्दमुच्चारितं।

इति च। तदुक्तम्—शब्दवदिति।

यदि च संबन्धिभेदेन भेदः स्यात् ततो भिन्नकालसंबन्धिनो देवदत्तस्यापि भेदः स्यात्। नचैवमिष्टं एकरूपस्यैव प्रत्यभिज्ञायमानत्वादित्याह—

**यथा च व्यक्तिरेकैव दृश्यमाना पुनः पुनः।**
**कालभेदेऽप्यभिन्नैव जातिर्भिन्नाश्रया सती ॥३२॥**

इति। देशभेदनिबन्धनो न भेद इति शब्दे वक्ष्यति—

पर्यायेण यथा चैको भिन्नान् देशान् व्रजन्नपि।

इत्यत्र। तदत्र सर्वमूहितव्यम्। ये पुनरत्राप्यन्यत्वं ब्रुवते तेषां प्रत्यभिज्ञयोत्तरं दत्तं इत्युपरम्यते। यत् पुनरत्र पिण्डवृत्तिविकल्पनं कृतम्—कथं पिण्डेषु सामान्यं वर्तते। किं भूतकण्ठगुणवत् कार्त्स्न्येन किं वा स्रक्सूत्रवदवयवैः—इति तत्र यद्याद्यः पक्षः तत एकत्र कृत्स्नसमवेतमिति नापरत्र स्यात्। अथोत्तरः पक्षः ततः सावयवत्वप्रसङ्गः—इति। तदिदमविषये विकल्पितम्। यत्र हि परिमाणभेदोऽस्त्यवयवभेदो वा तत्रैवं विकल्पनं युक्तम्। यत्पुनः सर्वत्रैकरूपमनियतपरिमाणं निरवयवावस्थितं तत्रैवं विकल्पयितुमनुचितमेव। कथमपरिमाणं कृत्स्नं वर्तताम्। कथं चानवयवमवयवैरित्याह—

**कार्त्स्न्यावयवशो वृत्तिः प्रष्टुं जातौ न युज्यते।**
**न हि भेदविनिर्मुक्ते कार्त्स्न्यभागविकल्पनम् ॥३३॥**

इति। अन्यस्तु—जातिव्यक्त्योर्भेदाभावेन नास्य विकल्पस्यावसरोऽस्ति—इति व्याख्यातवान्। न पुनरेतद्युक्तम्। वैशेषिकादिमतेन ह्येतद्व्यतिरिक्तसामान्याङ्गीकरणेन वक्तुमारब्धम्। नात्राव्यतिरेकपक्षस्यावसरोऽस्ति यतः।

ननु यदि न कार्त्स्न्यावयवशो वर्तते कथं तर्हि वर्तते इति वक्तव्यमित्याशङ्क्य कथयति—

**तस्माद्व्यक्तिषु जातीनां वृत्तिरस्तीति गम्यते।**

इति। यथाहुर्नैयायिकाः—तस्माद्वर्तते इति ब्रूमः—इति। वृत्तिविशेषस्तु कार्त्स्न्यावयवरूपः परिमाणावयवाभावाभ्यामनवकाश एवेति तद्रहिता वृत्तिः शुद्धावतिष्ठते इति सिद्धमित्याह—

विशेषावसराभावात्तन्मात्रैवावतिष्ठते ॥३४॥

इति । यत् पुनर्दृष्टान्तरूपतयावयववृत्ति स्रक्सूत्रं कार्त्स्न्यवृत्ति भूतकण्ठगुणादिकमुपन्यस्तं तद्विशेषमजानानेन । तयोर्हि सावयवत्वं नियतपरिमाणत्वं चैवंवृत्तित्वे कारणम् । जातेस्तु नैतदुभयमस्ति । कथं तथा वृत्तिः । तदेतत् सर्वं श्लोकद्वयेनाह—

या चावयवशो वृत्तिः स्रक्सूत्रादिषु दृश्यते ।
भूतकण्ठगुणादेश्च प्रतिपिण्डं समाप्तितः ॥३५॥
तत्रावयवयोगित्वमविभुत्वं च कारणम् ।
आकृतेस्तदभावेन न प्रसक्तमदो द्वयम् ॥३६॥

इति । वयं पुनरेवं वदामः—कार्त्स्न्येन जातिर्वर्तते तथा प्रतीतेः । न च तावता परत्र न स्यात् अपरत्रापि कृत्स्नाया एव भावात् । अथ यदेकत्र कृत्स्नं तदपरत्र कथं कृत्स्नमेवेति चेत् यदि तथा प्रतीयते का क्षतिः । तस्मादेवमपि न दोषः । न चैवं वक्तव्यम्—विशेषरहिता शुद्धा वृत्तिरन्यत्र न दृष्टा—इति । अत्रैव दृश्यमानत्वात् किमन्यत्र दर्शनग्रहणेनेत्याह—

न च द्वैविध्यमेवेति वृत्तेरस्ति नियामकम् ।
त्रिविधस्यापि दृष्टत्वात् सम्भवो द्विविधो यथा ॥३७॥

इति । यदि तु—ईदृशी वृत्तिः स्रगादिषु न दृष्टा—इति कश्चिद्वदेत् स वक्तव्यः—स्रग्वृत्तेरपि किं भूतगुणवृत्तितुल्यत्वं दृष्टं तद्वृत्तेर्वा स्रगादिवृत्त्या इति । अथ मतं ते—वृत्ती परस्परविलक्षणे एव । तथा सतीयमपि ताभ्यो विलक्षणास्तु । कोऽत्र विशेषः—इति । तदेतत् स्वयमेवाशङ्क्याह—

इतरत्र न दृष्टं चेत् स्रगादिष्वपि तत् समम् ।
नैव ह्यन्योन्यतुल्यत्वं तयोर्नाप्यनया सह ॥३८॥

इति । न च यदेकत्रैव दृश्यते तदलीकं भवति [illegible]मित्याह—

न ह्यन्यस्मिन्नदृष्टत्वादग्नेरौष्ण्यं प्रणश्यति।

इति। किं च अनुमानसमधिगम्ये एवं युक्तं वक्तुम्—क्वेदं दृष्टम्—इति। प्रत्यक्षसमधिगम्ये तदभिधानमसंबद्धम्। न चेयं जातिरनुमानसमधिगम्या प्रत्यक्षत्वादित्याह—

न चानुमानगम्येयं वाञ्छेद्येन निदर्शनम् ॥३९॥

इति। का चेयं युक्तिः यत् पिण्डे वर्तमानं सामान्यमुपलभ्यापि सकृत्स्नत्वादिवृत्तिप्रकारासंभवेनालीकमुच्यते। कः खलु तेनास्य विशेषः। सोऽपि हि प्रत्यक्षग्राह्यत्वेनैवाङ्गीक्रियते। तत्रावाप्यविशिष्टमित्याह—

स्वरूपतश्च दृष्टाया वृत्तेर्न पररूपतः।
निराक्रियोपपद्येन तद्विशेषमपश्यताम् ॥४०॥

इति। कार्त्स्न्यावयवविशेषरहितं स्वरूपं तद्विशेषयुक्तं पररूपमभिप्रेतमिति द्रष्टव्यम्।

किंच यत्राङ्गानुरोधेन प्रधानबाधो भवति तदयुक्तमिति वक्ष्यति—अङ्गगुणविरोधे च तादर्थ्यात्—इति। यत्र पुनरङ्गाङ्गानुरोधेन प्रधानबाध आपद्यते तदत्यन्तमयुक्तियुक्तमित्याह—

अङ्गाङ्गासम्भवाच्चापि या प्रधाननिराक्रिया।
सायुक्तैव

इति। प्रधानं जातिः। तदङ्गं वृत्तिः। तदङ्गमपि कार्त्स्न्यभागादियोग इति द्रष्टव्यम्। कस्मात् पुनरेतदयुक्तमित्याह—

अनुमानेन प्रत्यक्षज्ञानबाधनात् ॥४१॥

इति। युक्तियुक्तं त्वेतावदेव—यावत् प्रमाणेन नावगम्यते तावन्नास्ति। यावदवगम्यते तावदस्ति इति। न पुनः यस्मादेकमनुपलभ्यमानं नास्ति तस्मादुपलभ्यमानमप्यपरं नास्ति—इति। तदेतदाह—

तस्मादसम्भवो यत्र तन्मात्रस्यैव बाधनम् ।
युक्तं न तावतान्योऽपि सम्भवन् बाधमर्हति ॥४२॥

इति । सर्वं चैतद्वैशेषिकादिमतमाश्रित्योक्तं येषाम्—जातिर्निरवयवा सर्वव्यापिनी शब्दवत्—इत्यभ्युपगमः । अस्माकं तु पिण्डस्यैव तदात्मकत्वात् किं क्व वर्तताम् । अतश्चैवंरूपा जातिर्यत्र यत्र पिण्डेनाभिव्यज्यते तत्र तत्र कार्त्स्न्यभागविकल्परहिता गकारादिवर्णवद् गृह्यते इत्युपसंहरन्नाह—

तेन वैशेषिकोक्तापि जातिः सर्वगता सती ।
व्यज्यते यत्र पिण्डेन वर्णवत्तत्र गृह्यते ॥४३॥

इति । एवं प्रत्यक्षाधिगम्ये सामान्ये येऽनुमानेन किंचित् प्रलपन्ति तान् प्रति सद्भावसाधनार्थमनुमानमाह—

तस्मात् पिण्डेषु गोबुद्धिरेकगोत्वनिबन्धना ।
गवाभासैकरूप्याभ्यामेकगोपिण्डबुद्धिवत् ॥४४॥

इति । शाबलेयादिपिण्डेषु या गोबुद्धिः सैकवस्तुनिबन्धना सामान्यरूपगोत्वनिबन्धना वा । एकरूपत्वात् गवाकारत्वाच्च एकपिण्डबुद्धिवत् गोपिण्डबुद्धिवच्चेति प्रयोगद्वयमत्र योज्यम् । अन्यस्त्वेकस्मिन्नेव साध्ये हेतुद्वयमेव व्याख्यातवान् । तत् पुनर्नातीव शोभनमिति न प्रदर्शितम् । प्रयोगान्तरमाह—

न शाबलेयाद्गोबुद्धिः ततोऽन्यालम्बनापि वा ।
तदभावेऽपि सद्भावाद्धटे पार्थिवबुद्धिवत् ॥४५॥

इति । शाबलेयालम्बना गोबुद्धिर्न भवति तदभावेऽपि भावात् । या या तदभावे भवति सा सा तदालम्बना न भवति घटे पार्थिवबुद्धिवदित्यर्थः । आभ्यामेव हेतुदृष्टान्ताभ्यां साध्यान्तरमाह — ततोऽन्यालम्बनापि वा । शाबलेयव्यतिरिक्तालम्बना गोबुद्धिरित्यर्थः ।

एवं सामान्यसद्भावे प्रमाणमुपन्यस्य तद्व्याप्तिप्रकारदर्शनार्थमाह—

प्रत्येकसमवेतार्थविषया वापि गोमतिः ।
प्रत्येकं कृत्स्नरूपत्वात्प्रत्येकव्यक्तिबुद्धिवत् ॥४६॥

इति । गोमतिर्धर्मिणी । कृत्स्नवस्तुविषयेति साध्यो धर्मः । कृत्स्नरूपत्वादिति हेतुः । या या कृत्स्नरूपा सा सा कृत्स्नवस्तुविषया व्यक्तिबुद्धिवदिति दृष्टान्तः । एवं तु प्रत्येकं कृत्स्नसमवायिसामान्यमङ्गीकृतम् । तच्च नातीव विरुद्धमिति प्रकटितमत्रास्माभिः ।

यत्पुनरेकव्यक्तियुक्तस्यापरव्यक्तियोगाङ्गीकरणे भेदः प्राप्नोतीत्युक्तं तत्राप्याह—

प्रत्येकसमवेतापि जातिरेकैव बुद्धितः ।
नञ्युक्तेष्विव वाक्येषु ब्राह्मणादिनिवर्तनम् ॥४७॥

इति । अब्राह्मण इत्यादिप्रयोगेषु यथा ब्राह्मणादिव्यावर्तनमेकैकस्मिन् क्षत्रियादावेकरूपया बुद्ध्या गृह्यमाणमभिन्नं एवं गोत्वमप्यभिन्नमित्यर्थः । एकरूपं च निवर्तनं परैरपि न भिन्नमङ्गीकृतमिति दृष्टान्तसिद्धिः ।

यत्पुनः सादृश्यमेव सामान्यमित्युक्तं तत्राप्याह—

न च सादृश्यविषया गोधीस्ताद्रूप्यजन्मतः ।
प्रामाण्ये सति यद्वद्धि प्रत्यभिज्ञैकवस्तुनि ॥४८॥

इति । गोबुद्धिर्धर्मिणी । सदृशोऽस्या न विषय इति साध्यो धर्मः । तदेवेदमित्येवंरूपोत्पत्तेरिति हेतुः । प्रामाण्ये सतीति च विशेषणम् । अबाधितरूपत्वे सतीति यावत् । यत्र यत्राबाधितरूपा—तदेवेदम्—इत्येवंरूपोत्पत्तिः तत्र तत्र न सदृशो विषयो भवति यथैकवस्तुप्रत्यभिज्ञायामिति दृष्टान्तः ।

अत्र चोद्यभाष्यम् । व्यामोहः इति चेत्—इति । तत्परिहारभाष्यम्—नासति प्रत्ययविपर्यासे व्यामोह इति शक्यते वक्तुम्—इति । तद्व्याचष्टे—

नैकरूपमतिर्गोत्वे मिथ्या वक्तुं च शक्यते ।
नात्र कारणदोषोऽस्ति बाधकप्रत्ययोऽपि वा ॥४९॥

इति । बाधकप्रत्ययकारणदोषज्ञाननिबन्धनं हि मिथ्यात्वं न वाङ्मात्रनिबन्धनम् । न च तदुभयमत्रास्तीत्यभिप्रायः ।

अत्र भाष्यम्—असत्यप्यर्थान्तरे एवंजातीयकं भवति प्रत्ययः पङ्क्तिः यूथं वनं इति यथा इति चेत्—इति । तत्परिहारभाष्यम्—असम्बद्धमिदमुपन्यस्तम्—इत्यादि । तदयुक्तमिव दृश्यते । यस्मादाकृतेरस्तित्वे व्यतिरेकेण ग्राह्यत्वं प्रमाणमुपन्यस्तम् । तच्च व्यतिरिक्तग्राह्यत्वं पङ्क्तियूथवनादावप्यस्ति । अतोऽनैकान्तिकं कथं नामाकृतिं समर्थयेत् असमाधानं युक्तमेव चोदितम् कथमसम्बद्धमित्युच्यते । तदेतदाह—

यदा व्यक्त्यतिरेकेण ग्राह्यत्वादन्यताकृतेः ।
वनवन्नास्त्यनेकान्तात्तत्रासम्बद्धता कथम् ॥५०॥

इति । एवमाक्षिप्य समर्थयन्नाह—

साधनं चेन्मयोच्येत युज्येत व्यभिचारिता ।
दूषणत्वधिया ह्येतदसम्बद्धत्वमुच्यते ॥५१॥

इति । अयमर्थः—यदीदं साधनमुक्तं स्यात्—व्यतिरेकेण गृह्यमाणत्वात् इति ततः पङ्क्त्यादिभिरनेकान्तः क्रियेत । यदा तु परोक्तजात्यपलापसाधनदूषणमिदमुक्तं तदानैकान्तिकोद्भावनमसम्बद्धमित्यर्थः ।

ननु दूषणमपि येन हेतुना दत्तं स चेदनैकान्तिकः क्रियते ततः साधनमसमर्थमेव कृतं भवति । कथमसम्बद्धतेत्याशङ्क्याह

नास्तित्वहेतोरुक्तैषा प्रत्यक्षेण विरुद्धता ।

इति । एतदुक्तं भवति—यदि दूषणमपि हेतुना दत्तं स्यात्तदाप्येतदनैकान्तिकम् । प्रत्यक्षविरोधोद्भावने त्वनैकान्तिकत्वकथनमसम्बद्धमित्यर्थः । ननु साधनोपन्यासे सति प्रत्यक्षविरोधोऽभिधीयते । न चात्र तदुपन्यस्तम् । कस्यायं विरोध इत्याशङ्क्याह—

परस्य साधनं ह्यत्र यत्तत् पूर्वमुदाहृतम् ॥५२॥

इति । साधनमन्तर्भाव्य तत्राकृतिः साध्येत्युक्तम् । तच्च साधनं तद्धीज्ञानाविच्छिन्नादिति । तदेतत् पूर्वमेव दर्शितम् । इह च तदेवानुसन्धाय प्रत्यक्षविरोधो योजनीय इत्यर्थः ।

यदि पुनः—असत्यप्यर्थान्तरे—इत्यस्यायमर्थोऽभिधीयते—सत्यं सामान्यप्रत्ययोऽस्ति । स तु वनादिप्रत्ययतुल्यः मिथ्याभूतः। न तेन प्रत्यक्षविरोधः—इति तत्राप्येतदेवोत्तरम्—असम्बद्धमिदम्—इत्यादि । बाधकप्रत्ययबलेन यत्रासति वने वनप्रत्ययो मिथ्याभूतः। किमेतावता यत्राप्यसौ वृक्षादिजातिप्रत्यये नास्ति तेनापि मिथ्या भवितव्यमित्युत्तरार्थः। तद्व्याचष्टे—

**प्रत्यक्षाभासता चात्र नैवास्ति वनबुद्धिवत् ।**

इति । अथायं चोद्याभिप्रायः—असत्यप्यर्थान्तरे वनादौ वनप्रत्ययो भवति। अतो जातिप्रत्ययोऽप्यसत्येवार्थान्तरे प्रत्ययत्वात्—इति । तत्राप्येतदेवोत्तरम्—असम्बद्धम्—इत्यादि । यदि वनप्रत्ययमिथ्यात्वेन सामान्यप्रत्ययो मिथ्येति साध्यते सत्यं तर्हि स्वप्नादिप्रत्ययमिथ्यात्वेन जाग्रत्प्रत्ययमिथ्यात्वमित्येतदेवाभिधानम् । न चैतदस्ति दूरमेव निराकृतत्वादित्याह—

**कस्यचिन्न हि मिथ्यात्वान्न सर्वं मिथ्येत्यसङ्गतिः॥५३॥**

इति । न हि कस्यचिद्वनादिप्रत्ययस्य मिथ्यात्वात् सर्वो जात्यादिप्रत्ययो मिथ्या भवति । अतोऽसम्बद्धमित्यर्थः । एतदेव प्रपञ्चयति—

**यथा वनादिबुद्धीनां मिथ्यात्वान्न रसादिधीः ।**
**मिथ्यैवं जातिबुद्धिः स्यात्**

इति । यदि पुनरेवमुच्यते—न सर्वं रसादिज्ञानमपि मिथ्या वदामः । अपि तु जातिप्रत्ययमात्रम्—इति । तद्धि विशेषे सति वक्तुं युक्तम् । न चासावस्ति । अथास्त्येव तर्ह्यभिधीयतामित्याह—

**विशेषो वाभिधीयताम् ॥५४॥**

इति । ननु त्वयाप्यविशेषे कथं वनादिबुद्धिमिथ्यात्वं वाच्यम् । सत्यं न वाच्यं यद्यविशेषः स्यात् । अस्ति तु विशेषः । दूरस्थितो हि पुरुषो वृक्षविभागं न प्रत्येति । अतश्च विभागप्रत्ययो भवत्यस्य । आकृतौ तु न कश्चिदेवंरूपो विभागोऽस्ति । तदेतदाह—

वृक्षेभ्यो व्यतिरेकेण वने यैकमतिर्भवेत् ।
दूरत्वदोषस्तत्र स्यादाकृतौ तु न विद्यते ॥५५॥

इति । कथं पुनरेवमवगम्यते—दूरत्वेन दोषेणागृहीतवृक्षविभागोऽविभागं प्रत्येति—इति । बाधकप्रत्ययादिति ब्रूमः । सन्निकृष्टो हि तत्रावगच्छति—नैतदेवम्—इति । न पुनरेवं जातिबुद्धेर्बाधकं किंचिदस्ति । तदेतदाह—

सन्निकृष्टस्य वृक्षेषु बुद्ध्येकत्वं निवर्तते ।
केनचित्तु प्रकारेण जातिबुद्धिर्न नश्यति ॥५६॥

इति । तदेतच्चोपरिष्टाद्भाष्यकारो वक्ष्यति—यदि वनेऽप्येकेन हेतुना—इत्यादिना—न च गवादिषु विपर्यय—इत्यादिना च । तदत्र विशेषाभिधानप्रस्तावे चाकृष्य व्याख्यानं द्रष्टव्यम् ।

किंच यदेतदुपन्यस्तम्—असत्यप्यर्थान्तरे वनादिवत् प्रत्ययो भवति—इति तदपि यदि अपरोक्षरूपैकाकारप्रत्ययाभिप्रायेणोक्तं [illegible] को-पन्यासेन निरस्तमित्याह—

ऐकत्वधीर्विना शब्दात्सैव तावन्निराकृता ।

इति । यदि पुनर्वनशब्दजनितैकाकारविकल्पाभिप्रायेणोपन्यस्तं तत्र यद्यपि सन्निकृष्टस्य बाधकप्रत्ययो नास्ति तथापि प्रत्यक्षादिप्रमाणान्तर-संवादाभावेन मिथ्यात्वम् । जातिप्रत्यये तु गवादौ [illegible] । अतश्च पुनरप्यतुल्यं स्यात् । तदेतत् सार्धेन श्लोकेनाह—

वनशब्दानुरक्ता तु मध्यस्थस्यापि जायते ॥५७॥
मिथ्यात्वकल्पना तस्याः प्रत्यक्षादेरसंभवात् ।
जातिः सर्वप्रमाणैस्तु तद्रूपैवावगम्यते ॥५८॥

इति । भाष्यमप्येवंपरं योऽयम्—किं प्रत्यक्षादिसंवादाभावेनावगतं कस्मिन् वने वनशब्दजनितैकाकारप्रत्ययो मिथ्याभूत इति प्रत्यक्षादिसंवादिनापि वृक्षादिप्रत्ययेन मिथ्या भवितव्यम्—इति ।

ननु—संवादाभावेनाप्रामाण्यं संवादेन च प्रामाण्यं वदतः परतः प्रामाण्यं स्यात्। अस्त्येतत् केवल पदविषयम्। एतद्धि प्रमाणपरिच्छिन्न एव प्रवर्तते। अतस्तदभावादवगतिमुत्पादयदलीकमिति शक्यते वक्तुम्। अत एव न तत् प्रमाणमित्युक्तम्। तदेतदाह—

प्रमाणान्तरगम्ये च पदमर्थे प्रयुज्यते।
तेनादृष्टे प्रयुक्तस्य मिथ्यात्वं स्याद्वनादिषु॥५९॥

इति। एवं सत्यपि यज्जातिप्रत्ययस्य संवादित्वमुपन्यस्तं तदतिप्रौढतया वैषम्यप्रदर्शनार्थमिति द्रष्टव्यम्।

अन्ये तु पण्डितंमन्या अत्रैवं वदन्ति—यदि वनशब्दजनितैकाकारविकल्पमिथ्यात्वाभिप्रायेण वनवदित्युपन्यस्तं तदयुक्तं तस्य शब्दैकसमधिगम्यस्य सत्यत्वात्। संवादनिबन्धनं तु सत्यत्वं रसादिष्विवात्रापि अनादृत्यम्—इति। तदेतदाह—

केचिन्नित्यं वनैकत्वं शब्दगम्यं समाश्रिताः।
अन्यैः सङ्गत्यभावेऽपि सत्यं च स्याद्रसादिवत्॥६०॥

इति। अनुत्पन्नेऽर्थज्ञाने संवादाभावेनाप्रामाण्यं भवति। उत्पन्ने त्वसंवादो न दोषायेत्याह—

मिथ्यात्वं यदसङ्गत्या तदज्ञाने प्रसज्यते।
जायमानस्य दोषस्तु कश्चिद्वक्तुं न शक्यते॥६१॥

इति। यत्पुनः प्रमाणान्तरदृष्टेऽर्थे पदं प्रयुज्यते इत्युक्तं तदयुक्तम्। यतोऽयं धर्मो न सार्वत्रिकः अपूर्वादिशब्देष्वदर्शनादित्याह—

प्रमाणान्तरगम्येऽर्थे पदं नित्यं प्रयुज्यते।
धर्मोऽयं न च सर्वेषां पदानामभ्युपेयते॥६२॥

इति। अन्ये तु वदन्ति—वनशब्दविकल्पेन वृक्षा एव गृह्यन्ते। ते च प्रमाणान्तरप्रमिताः सन्त्येव। अतश्च जातितुल्योऽयं प्रत्ययो नालीकत्वेनोद्भावयितुं

युक्तः। यदि परं संख्यामात्रमत्र वृक्षव्यतिरिक्तान्यवस्तुविषयं वक्तव्यम्। प्रातिपदिकं तु प्रमितार्थविषय सत्यमेवेत्यभिप्रायेणाह—

**अस्त्येव सङ्घातश्चात्र वृक्षा इह बहवो वनम्।**
**ते च मानान्तरज्ञाताः संख्या चैषान्यवस्तुनि ॥६३॥**

इति। ननु बहुषु वृक्षेष्वेक वनप्रातिपदिकं कथं वर्तते। बहुत्वभिधेयेऽभिधानबहुत्वेनापि भवितव्यमिति चोदयति—

**नानेकस्यैकशब्द्यं चेत्**

इति। सिद्धान्तवादी त्वेकस्याप्यभिधानस्यैकशेषन्यायेन बहूनां वाचकं भवत्येवेत्यभिप्रायेणाह—

**एकशेषवदिष्यताम्।**

इति। ननु यत्रैकमभिधानं बहुषु वर्तते तत्र बहुवचनं भवति। तद्दर्शनेन हि तत्रापरस्मिन् गृह्यमाणे तदेव प्रातिपदिकं तदुपस्थापकं भवतीति सकृदुच्चरितमपि बहुरूपं भवति। अत्र तु तदभावात् कथमेकमनेकग्राहि प्रातिपदिकमङ्गीक्रियते इत्यभिप्रायेण चोदयति—

**तत्र संख्याविरुद्धिश्चेत्**

इति। सिद्धान्तवादी तु यावन्मात्रं न सम्भवति तावन्मात्रमेव तदलीकमस्तु। न तदलीकत्वेन सम्भविनोऽप्यलीकत्वं वाच्यम्। अतः प्रातिपदिकं सत्यार्थम्। विभक्त्यर्थस्त्वलीको नामास्तु। तथापि सर्वात्मना तत्रोपन्यासोऽनुचित एवेत्याह—

**अस्तु तन्मात्रवर्जनम् ॥६४॥**

इति। यदि वा संख्यापि प्रमाणान्तरप्रतिपन्ना क्वचनलिङ्गानुमेयास्त्येवेति नैयायिकाभिमतेनाह—

**तस्मात् सामान्यदृष्टेन सिद्धकत्वस्य सङ्गतिः।**

इति। न च यत्केवलं सामान्यतोदृष्टेन गम्यते तन्नास्ति सूर्यगमनमिव। अतः संख्याप्यन्यप्रमाणेनानवगम्या शुद्धसामान्यतोदृष्टगम्या सत्यैव भविष्यतीत्यभिप्रायेणाह—

तेनान्यानवगम्यापि संख्या स्यात् सूर्ययानवत् ॥६५

इति । सामान्यतो दृष्टं च—वनम्—इति शब्दरूपं पारमार्थिकसंख्या-भिधायकं साधुत्वे सत्येकवचनान्तत्वात्—गौः—इत्यादिशब्दवत् इति ।

अन्ये त्वेवं वदन्ति—प्रातिपदिकं विभक्तिश्च द्वयमपि प्रमाणान्तरप्रतिपन्नार्थविषयम् । तथाहि । अस्तीह बहुत्वं नाम सामान्यम् । तच्च कदाचित् ब्राह्मणादिसंघटकं कदाचित् वृक्षादिसंघटकं भवति । तत्र यदा वृक्षादिसंघटकं भवति तदा वनादिशब्दाभिलप्यम् । यदा त्वन्यत्र तदा बहुशब्दाभिलप्यम् । तच्चैकरूपमित्येकवचनमपि सिध्यति । तथा च यत्र यत्र तत् वृक्षसंघटकं दृश्यते तत्र तत्र वनशब्दाभिधेयं वनसामान्यरूपमपि सिद्धमिति । तदेतदाह—

केचिद्बहुत्वसामान्यमाहुर्वृक्षास्थितं वनम् ।
तत्र चैकत्वमस्त्येव वनत्वं चापि विद्यते ॥६६॥

इति । अयमपि चार्थः प्रतिभात्येव । मतान्तरमिदम्—

वनत्वं चापि विद्यते

इति । एतदुक्तं भवति—कदाचित् वृक्षसंघटकबहुत्वाभिप्रायेण वनशब्दः प्रवर्तते । कदाचित् बहुवृक्षगतवनत्वसामान्याभिप्रायेण—इति । वाशब्दार्थे चशब्दो वाशब्द एव वा अयमिति द्रष्टव्यम् । उपरितनं च वार्तिकं बहुत्वसामान्यसमर्थने वनत्वसामान्यसमर्थने च तुल्यमिव दृश्यते । वनत्वसामान्यसमर्थने एव वा सादरमिव दृश्यते येनैवं वक्ष्यति—

गृह्यते वनता तथा ।

इति । ननु यदिदं बहुत्वसामान्यं वनत्वसामान्यं वा वनशब्दाभिधेयं दर्शितं तदनुपपन्नमिव दर्शितम् । न ह्यस्य सामान्यस्य गोत्वादेरिव शाबलेयादिरेकः कश्चिदाश्रयः । न चानेकाश्रयाश्रितमेकं सामान्यं क्वचिद्दृष्टम् । अपि त्वेकैकाश्रयाश्रितमेव । तत् कथमेतदित्याशङ्क्य परिहरति—

विनाप्येकाश्रयत्वेन यथैवावयवी तथा ।
असंयुक्तैरभिव्यक्तिर्दृष्टत्वान्न विरोत्स्यते ॥६७॥

इति। अयमभिप्रायः—यद्यप्यनेकाश्रयाश्रितं सामान्यं न दृष्टं अनेकावयवाश्रितस्त्वेकोऽवयवी दृष्ट एव। ततश्च यथासौ दृष्टत्वादङ्गीकृतः तथैकस्यापि किमिति नाङ्गीकरणम्—इति। अत एवैतदपि न वक्तव्यम्—परस्परसंयुक्तानेकाश्रयाश्रितो ह्यवयवी। नैवं बहुत्वं वनत्वं वा परस्परासंसृष्टत्वात् वृक्षाणाम्—इति। यतो दर्शनमात्रप्रमाणं तत् यत्र यथा भवति तत्र तथेत्यङ्गीकर्तव्यम्। तदुक्तम्—असंयुक्तैरभिव्यक्तिः—इति। यत्र यत्रेदानीं वृक्षसमवेतं बहुत्वं बहुवृक्षाभिव्यक्तं वनत्वं वा तत्र तत्र—वनम्—इति सामान्यप्रत्ययोऽपि सिद्ध इत्याह—

**अन्यत्रापि च तद्बुद्धेः सामान्यं तद्भविष्यति।**

इति। अथापि कथंचिदसंसृष्टानेकाश्रयाभिव्यक्तेन सामान्येन विना न तुष्यति भवान् तदपि तर्हि शक्यमेव निःशङ्कितुमित्याह—

**यथा वा भ्रमणत्वादि भङ्गिष्ववयवेष्वपि ॥६८॥**
**व्यक्तं नानाश्रयत्वेऽपि गृह्यते वनता तथा।**

इति। यथा प्रतिक्षणप्रध्वंसिषु भ्रमणक्रियाक्षणेषु असंश्लिष्टेष्वभिव्यक्तं भ्रमणत्वसामान्यं गृह्यते तथा नानाश्रयत्वेऽपि वनत्वं बहुत्वं च गृह्यते इत्यर्थः। यदि वा वनता वनतापि किं वृक्षेष्वेव तथापि तेषामेकवचनमेकार्थक्रियाकारित्वेन भविष्यति। भवति हि बहूनामेककार्यनिबन्धनमेकवचनम् यथा—गकारौकारविसर्जनीयाः पदम्—इति। परिहारान्तरमाह—

**यद्वैककार्यहेतुत्वादेकगोशब्दवद्वनम् ॥६९॥**

इति। एकं वनमित्येकवचनेनाभिधेयं वनं एको गोशब्द इति वदित्यर्थः।

एतदेवोचितमपि दृश्यते। यतो यत्र तदेकं कार्यं नास्ति तत्र बहुत्वेऽपि वृक्षेषु वनशब्दप्रवृत्तिर्न दृश्यते। पूर्वव्याख्यायां तत्रापि बहुत्वस्य विद्यमानत्वात् किमिति न दृश्यते इत्यभिप्रायेणाह—

**नित्यं ये व्यस्तविज्ञाता वृक्षा नेष्टा हि ते वनम्।**

इति। पूर्वमन्वयमाशय आसीत्—यथा वृक्षगतं बहुत्वं वनशब्दवाच्यं नान्यगतं एवं विशिष्टवृक्षगमेव। वनत्वं सामान्यमपि यथावस्थितैरभिव्यज्यते तथाङ्गीकर्तव्यम्। तस्मात् सोऽपि न दोषः। यदि वा वनप्रातिपदिकं वृक्षेष्वेव वर्तताम्। न च प्रातिपदिकं यत्र तत्रैव विभक्तिः तल्लक्षितेऽपि दृष्टत्वात्। अतोऽत्र वनादिशब्दाभिहितबहुवृक्षाद्याक्षिप्तैकदेशकालादिकं किंचिदाश्रित्यैकवचनं भविष्यतीत्याह—

**यद्वा लक्षणयैकत्वं देशकालक्रियादिभिः ॥७०॥**
**द्रव्यैकत्वं विनापीष्टं पङ्क्तियूथवनादिषु।**

इति। सर्वश्चायं समर्थनप्रकारो भगवतो भाष्यकारस्याभिमतः—अथ वनादिषु नैव प्रत्ययविपर्यासः न ते न सन्ति इति इत्यनेनोक्त इति द्रष्टव्यम्।

यदि तु चोद्यस्यायमभिप्रायः—यथा वृक्षसमुदाये विनाप्येकेनार्थेन वनप्रत्ययः एवमेवायं शाबलेयादिसमुदाये विनाप्येकेन गोत्वेन गोप्रत्ययः—इति तत्राप्येतदेवोत्तरमसंबद्धमिति। यदि नामायमत्र वने वृक्षसमुदाये वनप्रत्ययो मिथ्याभूतः किमेतावता यत्रापि समुदायप्रत्ययो नास्ति वृक्षत्वादिजातिप्रत्यये तेनापि मिथ्या भवितव्यम्। तदेतदाह—

**वृक्षाणां समुदाये च वनधीर्जायते यथा ॥७१॥**
**नैवं गोसमुदायेऽपि गोत्वधीरुपजायते।**

इति। अत्र प्रत्येकस्मिन पिण्डे वृक्षबुद्धिरिव शाखादिमति गोबुद्धिरुदेतीति कथमसौ वृक्षव्यतिरिक्तपदार्थासिध्या यथा वनबुद्धिः समुदायालम्बनोक्ता तथाभिधीयते इत्याह—

**यादृशी वृक्षधीस्तत्र गोत्वधीरपि तादृशी ॥७२॥**
**वनवन्नापृथक्सिद्धेः समुदायस्य कल्पना।**

इति। ननु मा नाम शाबलेयादिसमुदायालम्बना गोबुद्धिर्भवतु। सास्नादिसमुदायालम्बना तु न हि वारयितुं शक्या। न हि वृक्षसंघमिव सास्नादिसंघमन्तरेण तद्बुद्धिर्दृष्टेत्याशङ्क्याह—

न च सास्नादिसंघातस्तद्बुद्ध्यालम्बनं भवेत् ॥७३॥

इति । किमिति न भवतीत्याह—

क्षीणेषु पिण्डबुद्ध्येषु तत्सामान्ये हि गोत्वधीः ।

इति । अयमभिप्रायः— यदि सास्नादिसमुदायालम्बना बुद्धिर्वक्तव्या ततः पिण्डबुद्धिरभ्युपेयताम् । सा हि सास्नादिसमुदायगतं तत्त्वमध्यवस्यति । गोबुद्धिस्तु सास्नादिसमुदायमन्तरेण पिण्डमेव तथारूपतया गृह्णातीति कथमसौ सास्नादिसमुदायालम्बनाभिधीयते— इति । ततश्च यद्यपि पिण्डोऽवयवी समुदायरूपो नास्ति तथापि सामान्यं तावत्र सास्नादिसमुदायात्मकमित्याह —

तेनावयव्यभावेऽपि सामान्यं व्यतिरिच्यते ॥७४॥

इति । न त्वेतदभ्युपगम्यवादमात्रमिति द्रष्टव्यम् । अन्यथा पिण्डाभावे किमपरं सामान्यरूपं भावयेत् । अत एव चानन्तरमाह—

पूर्वोक्तादेव च न्यायात् सिध्येत्तत्रावयव्यपि ।

इति । यादृश्येव तत्त्वैषम्य जातावुक्तं तादृश्यवयविन्यपि योजनीयमित्यर्थः । यथा च व्यतिरिक्ताव्यतिरिक्तसामान्याश्रयणे नात्यन्तव्यतिरेकाव्यतिरेकविकल्पनाः परोक्तदोषाः परिहृताः तथावयविन्यप्युभयरूपाङ्गीकरणेन योज्यमित्याह—

तस्याप्यत्यन्तभिन्नत्वं न स्यादवयवैः सह ॥७५॥

इति । तत्राव्यतिरिक्तता तावत् स्थूलबुद्ध्यैव निराकृता । अत्यन्तव्यतिरेकस्त्ववयवविभागाप्रतिपत्त्यैव न युज्यते इत्याह—

व्यक्तिभ्यो जातिवच्चैष न निष्कृष्टः प्रतीयते ।

इति । अयमेवात्र व्यतिरेकाव्यतिरेकपक्षो युज्यते नैकान्तवादः । तथाहि—आसंसारमवयवानां वैशेषिकाङ्गीकृतं व्यतिरिक्तत्वं सांख्यैर्दूष्यमाणमपि लोके प्रसिद्धिं गतम् । सांख्याङ्गीकृतं चाप्यत्यन्ताव्यतिरिक्तत्वं वैशेषिकैः । न चैतदुभयरूपसत्यत्वेन विना युज्यते । अन्यथा हि यदनयोर्विरूपकं तत् कूटरूप्यवत् परित्याज्यं स्यात् । न चैवंभूतम् । अत उभयरूपसत्यत्वमेव लोकेन प्रतिपन्नमित्यवगम्यते । तदेतत्सर्वं सार्धेन श्लोकेनाह—

कैश्चिदव्यतिरिक्तत्वं कैश्चिच्च व्यतिरिक्तता ॥७६॥
दर्शितं साधितं चापि न च तत्र बलाबलम् ।
कदाचिन्निश्चितं कैश्चित्तस्मान्मध्यस्थता भवेत् ॥७७॥

इति । तस्माज्जातिवदेवात्र व्यतिरिक्ताव्यतिरिक्तत्वमवयविनो वाच्यमित्युपसंहरन्नाह—

तेनान्यानन्यते तस्य स्तो न स्तश्चेति कीर्त्यते ।

इति । अतश्च यथा चित्रे वस्तुन्येकरूपाभिधानमलीकं एवमत्राप्येकान्तवादोऽलीक इत्याह—

तस्माच्चित्रवदेवास्य मृषा स्यादेकरूपता ॥७८॥

इति । नन्वेवं सति यथा स्थाणुरयं पुरुषो वेत्येकत्रोभयरूपप्रतीतेर्न प्रमाणत्वं एवमिहाप्युभयरूपप्रत्ययस्याप्रमाणत्वं युक्तम् । न हि तत्रोभयरूपा प्रतीतिरित्यप्रमाणत्वम् । अपि त्वनिश्चितवस्त्ववसायित्वेन । एषा हि तत्र प्रतीतिः—न जाने किमयं स्थाणुः किं वा पुरुषः—इति । न पुनः—स्थाणुरयं पुरुषोऽप्ययम्—इति । अत्र पुनः—अयं देवदत्तः—इत्यव्यतिरेकप्रतीतिरप्यस्ति । देवदत्तस्य हस्तपादादिः—इति व्यतिरेकप्रतीतिरपि । निश्चितरूपे एते प्रतीती । अत्र तेन वस्तुन एवानेकरूपत्वादेवंविधप्रतीतिरिति वाच्यम् । न स्थाण्वादिवत् संशयनिबन्धनमप्रामाण्यम् । तदेतत् सार्धेन श्लोकेनाह—

वस्त्वनेकान्तवादाच्च न सन्दिग्धा प्रमाणता ।
ज्ञानं सन्दिह्यते यत्र तत्र स्यादप्रमाणता ॥७९॥
इहानैकान्तिकं वस्त्वित्येव ज्ञानं सुनिश्चितम् ।

इति । यत्पुनरव्यतिरिक्तत्वे कारणमुक्तम् अवयवानिष्कर्षेणाविज्ञानं तदन्यत्ववादिनो वैशेषिकस्यापि युज्यते । स हि मन्यते—व्यतिरिक्तोऽप्यवयवेष्ववस्थितः इति तन्निष्कर्षे चास्य विनाशो बुद्धिस्थो भवति । तेन न प्रतीयते । न पुनरव्यतिरेकात्—इति । तस्मादनैकान्तिकमवयवानिष्कर्षेणाज्ञानमित्याह—

निष्कृष्यावयवान् बुद्ध्या यावयव्यप्रतीतिता ॥८०॥
बुद्धिस्थत्वाद्विनाशस्य मौलूक्यस्यापि युज्यते ।

इति। यत्पुनरत्रावयविनिराकरणे बहु विकल्पितम्—कथमसाववयवेषु वर्तते। किं प्रत्येकं किं वा व्यासज्य—इति। प्रत्येकपक्षे तावदेकावयवग्रहणेऽपि तद्ग्रहणप्रसङ्गः। व्यासज्यपक्षेऽपि सकलग्रहणेन ग्रहणं स्यात्। न च तत्सकलस्य अन्तर्वर्तिनामवयवानां प्रत्येकमशक्यत्वात्। असमस्तग्रहणे च कतिपयग्रहणेऽपि ग्रहणं स्यात्। अवयवेषु च व्यासज्य वर्तमानोऽवयवान्तरैर्विना कथं व्यतिषजेत्। अवयवान्तराङ्गीकरणे तथैव पर्यनुयोगात्। तत्रानवस्थाप्रसक्तिरिति। अत्र प्रत्येकपक्षमनभ्युपगमेनैव निरस्य शेषपक्षं समर्थीकुर्वन्नाह—

वृत्तिश्चावयवेष्वस्य व्यासज्यैव प्रतीयते ॥८१॥
ततः कात्स्न्यादिसंप्रश्नः प्रत्याख्येयोऽत्र जातिवत् ।

इति। यः पुनरत्र—कथं चावयवान् व्याप्नोति—इति व्याप्तिविशेषप्रश्नः कृतः स जातिवद्व्याप्तिमात्राङ्गीकरणेन विशेषापहानेन च निरसनीयः। तेनैतावदेवात्रापि वक्तव्यम्—यदि प्रत्येकं न वर्तते समस्तावयवान् वर्तते तथादर्शनात्। कल्पनीया वा समस्तावयवदृष्टात्तद्दर्शनं तदवयवान्तरादर्शनेन च किमपि सामर्थ्यमस्यास्ति यद्बलेनावयवान व्याप्नोतीति। यत्पुनरग्रहणमिति समस्तावयवग्रहणाभावादिति चोदितं तदप्यत्यन्तमसम्बद्धम्। अतो नूनं हि तावत् समस्तावयवान्। न पुनस्तद्ग्रहणमपेक्षते। न चैतावता कतिपयावयवग्रहणादि वाच्यम्। यावतां ग्रहणात् गृह्यते तावतां ग्रहणमपेक्षते इति परिहारसंभवात्। अत एव च कम्पाकम्परक्तारक्तत्वचोद्यमपि दूरनिराकृतमित्युपेक्षणीयम्। अवयवा एव हि कम्पन्ते रज्यन्ते च नावयवी। यत्पुनरकम्पमानो रक्तश्चावयवी किमिति न गृह्यते इत्युक्तं तत्र वक्तव्यम्—को ब्रूते न गृह्यते इति। प्रतीयते हि—न कम्पते देवदत्तो न च रक्तः। अवयवोऽस्य कम्पते रक्तश्च—इति। यत्पुनरेकस्मिन्नेकावयवे कम्पमाने रक्ते चावयव्यकम्पमानोऽरक्तश्च दृश्यते तदुचितमेव। तत्र ह्यसौ नास्त्येव समस्तवृत्तित्वादित्युक्तम्। अनेन च मार्गेणान्यदपि परिहर्तव्यम्। एतेन तावद्यथा वृक्षसमुदाये वनप्रत्ययो नैवं सास्नादिसमुदाये गोप्रत्यय इत्युक्तम्। अतश्च कारणात्तत्समुदायालम्बनो न भवति। यदि

तत्समुदायालम्बनः स्यात् ततस्तेषां प्रतिपिण्डं भेदात् घटपटादिसमुदायवत् भिन्नरूपा प्रतीतिः स्यात् । न चैकरूपा गौरिति प्रतीतिः स्यात् । तदेतत् सर्वमाशङ्क्य दर्शयति—

**सास्नादिगणहेतुश्चेन्नान्यस्मिन् गोत्वधीर्भवेत् ॥८२॥**
**भिन्न एव हि सास्नादिः पिण्डात् पिण्डान्तरेषु नः ।**

इति । न चैवं वक्तव्यम्—कथं भिन्नरूपा प्रतीतिर्भवेत् । तेषामेव सास्नादीनां सद्भावात् । न हि वृक्षसमुच्चयनिबन्धना वनप्रत्ययोऽन्यस्मिन् वृक्षसमुदायेऽन्यादृशो भवति तेषां वृक्षाणां विद्यमानत्वात्—इति । यतस्त्वत्पक्षे त एव सास्नादय इति न शक्यते वक्तुं तत्सामान्यस्याप्यनङ्गीकृतत्वादित्याह—

**न चावयवसामान्यं परेषामुपपद्यते ॥८३॥**

इति। यदा सास्नादिसमुदायालम्बनैव गोबुद्धिर्न भूता न च निरालम्बना तदावश्यं तद्व्यतिरिक्तेन केनचिदेकेन सामान्यात्मनोत्पद्यते इत्यङ्गीकर्तव्यमित्याह—

**तस्मात् सास्नादितोऽन्येन गोत्वधीरुपजन्यते ।**

इति । यत्पुनर्निमित्तत्वादित्युक्तं तदेतदस्माकं सामान्यवादिना मते न भवति । वनतन्तु सोऽपि कुत इत्यभिप्रायेणाह—

**वनान्तरेषु या बुद्धिर्वनमित्युपजायते ॥८४॥**
**तस्यास्तदेव वृक्षत्वं ग्राह्यं बह्वाश्रयं विदुः ।**

इति । ननु त एव वृक्षा ग्राह्या इति युक्तं वक्तुम् । कथं वृक्षत्वं ग्राह्यमित्युक्तम् । वृक्षेषु प्रातिपदिकं वनते इत्युक्तं प्राक् न वृक्षत्वे । सत्यमेवमेतत् । एकवचनसमर्थनार्थमुपन्यस्तमिति न दोषः । तेनैतदुक्तं भवति—प्रातिपदिकं व्यक्तिषु वर्तते । तदाक्षिप्तजात्यपेक्षया त्वेकवचनमिति । भवति चाक्षिप्तापेक्षया एकवचनादियोगः । यथा जातिवाचिनां तदाक्षिप्तव्यक्त्यपेक्षया गावौ गाव इत्यादिः । तदेतदाह—

एकत्वेऽप्याकृतेर्यद्वद्बहुत्वं व्यक्त्यपेक्षया ॥८५॥
बहुत्वेऽपि तथा व्यक्तेरेकत्वं जात्यपेक्षया ।

इति । नचैवं वक्तव्यम्—भवतु नामाक्षिप्तजात्यपेक्षया एकवचनम् । स्वरूपापेक्षया तु बहुवचनमपि—इति । यतोऽनादिः शब्दशक्तिनियमः । कोऽत्र पर्यनुयुज्यते इत्याह—

एकानेकाभिधाने च शब्दा नियतशक्तयः ॥८६॥

इति । स्वाभाविकीमेव शब्दशक्तिं प्रपञ्चेन दर्शयन्नाह—

केचिद्व्यक्तिं स्वसंख्याकां गमयन्त्यम्बरादिवत् ।

इति । तथा व्रीहिशब्दोऽपि स्वसंख्याविशेषितां जातिमाहेत्याह—

एको व्रीहिः सुनिष्पन्न इति जातिं स्वसंख्यया ॥८७॥

इति । एवं व्यक्तिवाचिनां जातिवाचिनां च स्वसंख्यायोगमुक्त्वेदानीं व्यक्तिवाचिनामाकृतिसंख्यायोगमाकृतिवाचिनां च व्यक्तिसंख्यायोगमाह—

पत्नीसन्नहनादौ तु व्यक्तिमाकृतिसंख्यया ।
कपिञ्जलादिजातेस्तु प्रतीतिर्व्यक्तिसंख्यया ॥८८॥

इति । योक्त्रेण पत्नीं सन्नह्यति । अत्र बह्वीष्वपि पत्नीष्वेकवचनमाकृतिसंख्याभिप्रायेण । तथा कपिञ्जलानालभेत — इत्यत्रैकस्या जातेर्बहुवचनं व्यक्तिसंख्याभिप्रायेणेति द्रष्टव्यम् ।

अन्ये तु व्यक्तिवचनाः—अस्मान्पाशान — इत्यादयो जातिवचनाश्च दारादयो द्रव्यावयवसंख्यारूपबहुत्वमादाय प्रवर्तन्ते इत्याह—

व्यक्तिजाती वदन्त्यन्ये द्रव्यावयवसंख्यया ।
अस्मानिति यथैकस्मिन् पाशानदितिरित्यपि ॥८९॥

इति । अस्मान् पाशान्—इति चोभयमपि व्यक्त्युदाहरणं द्रष्टव्यम् । जात्युदाहरणं तु—दाराः—इत्यादि दातव्यम् । यः पुनः—पाशान्—इति जात्युदाहरणं वर्णयति नासावुपादीयमानाभिधाने विशेषं जानाति ।

उपात्ते हि व्यक्तिपरमभिधानम्। उपात्तपाशप्रकाशकश्चायं मन्त्र इति कुतोऽस्य जातिवचनता। तेनोपेक्षणीयमेतादिति।

एवं च संख्यायोगप्रकारानुक्त्वा नियमानियमविषयमिदानीं दर्शयन्नाह—

तत्र व्रीह्यादिशब्दानां संख्यायोगो यथारुचि।
वनदारादिशब्दास्तु प्रवर्तन्ते व्यवस्थया॥९०॥

इति। वृक्षो वृक्षा इत्यनियमेन जातिव्यक्त्यभिप्रायेणैकवचनबहुवचने भवतः। वनं दारा इति तु नियमेन जातिद्रव्यावयवसंख्याभिप्रायेणत्यर्थः। कथं व्यवस्थया प्रवर्तन्त इत्याह—

जङ्गमे स्थावरे चार्थे यथा यूथवनादयः।

इति। एतदुक्तं भवति—यथा यथं वनं इति च प्रातिपदिकं स्वभावतो बहुषु जङ्गमविशेषेषु स्थावरविशेषेष्वपि व्यवस्थया प्रवर्तते तथा तत्परा विभक्तयोऽपि संख्याविशेषे—इति। किं च वनदारशब्दयोरयमपरो विशेषः। दारशब्दो हि यदैकस्यां व्यक्तौ प्रयुज्यते तदावयव एव संख्यायोगेन वर्तते। यदा तु जातौ तदा वृक्षादिवत् व्यक्तिसंख्यायोगेनैव वर्तते। तदेतदाह—

तत्र व्यक्तौ च जातौ च दारादिश्चेत् प्रवर्तते॥९१॥
व्यक्तेरवयवानां वा संख्यामादाय वर्तते।

इति। वनशब्दस्तु सर्वदैव बहुव्यक्त्यभिधायी तदाक्षिप्तजातिसंख्यायोगेन प्रवर्तते। यदि वा बहुव्यक्त्यामव्यक्तबहुत्वादिसंख्यायोगेनेति न कदाचिदप्ययं वृक्षादिशब्दतुल्यः। तदेतदाह—

वनशब्दः पुनर्व्यक्तीर्जातिसंख्याविशेषिताः॥९२॥
बह्वीराहाथवा जातिं बहुव्यक्तिसमाश्रिताम्।

इति। तेन वनशब्दसंख्यायोगन्यायेनैव पङ्क्त्यादयोऽपि बहुव्यक्त्याश्रितं किंचिदेकं संख्यायोगादिकमाश्रित्य व्याख्येयाः। ततश्चार्थद्वारेण वा शब्दद्वारेण वा युक्तमुक्तम्—असत्यप्यर्थान्तरे—इत्यादिकम्—इत्युपसंहरन्नाह—

एवं पङ्क्त्यादिशब्दानां संयोगादि विशेषणम् ॥९३
सर्वेषां किंचिदस्तीति न निरालम्बनैकधीः।

इति। यदि त्वस्मन्मतमेवेत्याशङ्क्योच्यते—असत्यप्यर्थान्तरे एवं जातीयक—इत्यादि तदायमर्थः—वनादिशब्दाभिधेया वृक्षादयो न संभवन्ति—इति। तत्राप्युत्तरमसंबद्धमित्याह तस्यायमर्थः। अस्ति वने वनप्रत्ययो भवति—इत्येवं वदता किं प्रत्यक्षमेवाक्षिप्तम्—वृक्षा अपि न सन्ति—इति प्राप्तं तच्छून्यत्वाभिधानम्। तच्च निरस्तमिति तदेतच्चोद्याभिप्रायेण सह दर्शयति—

तुल्यं प्रत्यक्षयाकृत्या वने यत्तदसद्यदि ॥९४॥
वृक्षास्तत्र तया तुल्या इति शून्यत्ववादिना।

इति। अयं चास्याभिप्रायः—अतीव पापीयान्, यत् प्रत्यक्षाभासविज्ञानैकरूपवनमिथ्यात्वेन प्रत्यक्षविज्ञानाया आकृतेरपलापः क्रियते। कः खलु तया सह तस्य स्पर्धेत्याह—

प्रत्यक्षाभासगम्यत्वाद्वृक्षेभ्योऽन्यत्तु यद्वनम् ॥९५॥
.नाकृत्या सह तस्यास्तु स्पर्धा प्रत्यक्षगम्यया।

इति। अथ चोद्यस्यायमभिप्रायः—जातिमङ्गीकुर्वतस्तव मीमांसकस्य यदभिमतम्—असत्यप्यर्थान्तरे वनादिके वनप्रत्ययो भवति—इति तद्विघटितम्। यदपि जातिवत् सत्यं प्राप्नोतीति सोऽपि न युक्तः। तत्र प्रकृतजातिपक्षपरित्यागेन वनासद्भावे दूषणम्। तदिदं भाष्यकारेणोक्तम्—अथ किमाकृतिसद्भाववादुपालभ्यते—इत्यादिना। तद्वार्तिककारो व्याचष्टे—

अथाकृत्या वनं तुल्यं सद्भावेन प्रसाध्यते।
जातिपक्षविमोकेन तव सिद्धान्तदूषणम् ॥९६॥

इति। पूर्वार्धेन चोद्याभिप्रायप्रकाशनम्। उत्तरार्धेन परिहार इति द्रष्टव्यम्।

अथ भाष्यकारेण—वृक्षव्यतिरिक्तम्—इत्यादिना जातिवनवैषम्यदर्शनं कृतमिति पादत्रयेणाह—

इति निगदितमेतल्लोकसिद्धैः पदार्थै-
र्व्यवहृतिरिह शास्त्रे न स्वतन्त्राभ्युपेतैः ।
भवति च जनदृष्ट्या जातिपङ्क्त्यादिभेदः

इति । अथ वनादिषु नैव प्रत्ययविपर्यासः—इत्यादिना भाष्यकारेण पुनरपि वनादिसाम्यमुपन्यस्तम् । तदभ्युपगम्यवादे न दोषो भावदर्पणोक्त इत्याह—

यदि च न घटतेऽसौ नैव बाधोऽस्ति कश्चित् ॥९७॥

इति । तदेवमृजुनैव मार्गेण सर्वत्र भाष्यं व्याख्यातम् । पूर्वकं वार्तिकमेव-मेतद्भाष्यरूढमिति सौवीर्येणास्माभिरुक्तम् । न तथा व्याख्यातं स्यात् स्वमतेनैव तत्परिहारजातमनागतवीक्षणेनान्वेति । व्याख्यानमिदं प्रगुणेनैव मार्गेणेति न कदाचिदत्र व्याकुलता । तस्माद्वार्तिककारेण व्याकुलं भाष्यं व्याख्यातमित्येतदभिदधानाः स्वयमेव व्याकुला इत्युपेक्षणीयाः ॥

इति भट्टपुत्रजयमिश्रविरचितायां शार्करिकायां
वनवादः समाप्तः ॥

# संबन्धाक्षेपपरिहारः

अत्र भाष्यम्—अथ संबन्धः कः—इति। नन्वायं प्रश्नो वैयाकरणस्य। स हि तादृशं शब्दमेवार्थं मन्यते। यदा तौ मीमांसकेनात्यन्तं भिन्नौ दर्शितौ तदा तयोः कथमिव संबन्धो भविष्यति इति सविस्मयं पृच्छति—अथ संबन्धः कः—इति। यदि वा पूर्वं संबन्धकथनस्य शब्दार्थाविनाभावोद्भावितत्वात् कदाचिदपरमार्थतयोपन्यासः स्यात् इति मन्वानः परमार्थसंबन्धप्रतिपत्त्यभिप्रायेण पूर्वपक्षवादी पृच्छति इति व्याख्यातमेव। तथाचष्टे—

भवेतां नाम शब्दार्थौ यावेतावुदितौ त्वया।
यदर्थस्तु प्रयासोऽयं स संबन्धो निरूप्यताम् ॥१॥

इति। पर इदानीं तात्पर्यभेदमजानान आक्षिपति—

पूर्वमेवोपदिष्टः सन् संबन्धः किं नु पृच्छयते।

इति। यदप्यस्योत्तरम्—यत् शब्दे विज्ञातेऽर्थो विज्ञायते—इति तत्राप्याश्रयाश्रयिभावादिसंबन्धाविशेषाकथनात् उत्तरत्वं नास्ति इत्याह—

स्वरूपाकथनाच्चैतदुत्तरं नोपपद्यते ॥२॥

इति। यदि कश्चिदेवं पृच्छति—किमौषधं ज्वरस्य—इति स तावदेवं ब्रूयात्—येन येनासौ नश्यति तत्तस्यौषधम्—इति। तस्य पुनः किमेतदेवोत्तरमुच्चारितम्—येनासौ नश्यति तदस्यौषधम्—इति तदेतदाह—

किमौषधं ज्वरस्येति पृष्टो यदि वदेदिदम्।
येनासौ नश्यतीत्येवं किं तेन कथितं भवेत् ॥३॥

इति। अत्र केचित् पूर्वकस्य संबन्धस्य विरूपकस्य असंभवात् संबन्धान्तराभिधित्सया इदं प्रक्रान्तमिति परिहारमाहुः इत्याह—

तत्र केचिद्वदन्त्येवं पूर्वत्रापरितोषतः।
प्रश्नः पुनरुपक्रान्तः संबन्धान्तरमिच्छता ॥४॥

इति। किं पुनस्तस्य विरूपकत्वमुच्यते। संज्ञासंज्ञिलक्षणोऽसौ। संज्ञा च अर्थप्रतिपत्तिसमधिगम्या। अर्थप्रतिपत्तिश्च संबन्धान्तरमपाश्रयात्।

ततश्च यत्संबन्धान्तरममाश्रया अर्थप्रतिपत्तिः स एव संबन्धोऽस्तु। किं तदुत्तरकालीनेन प्रतीत्यनङ्गेन संज्ञासंज्ञिलक्षणेन संबन्धेन। तदेतदाह—

यः संज्ञासंज्ञिसंबन्धः स प्रतीत्युत्तरो यतः।
सा चान्यपूर्विका तस्मान्नास्य प्रत्यायनाङ्गता ॥५॥

इति। प्रतीत्यनङ्गत्वमेव प्रत्याय्यप्रत्यायकलक्षणस्य संबन्धस्य प्रकटयति—

अजानानोऽपि संज्ञात्वं संबन्धान्तरदर्शनात्।
बुध्यतेऽर्थं ततः पश्चात् कश्चित् संज्ञेति मन्यते ॥६॥

इति। धूमादेरिवाप्रतिपन्नप्रत्यायकत्वेऽपि सहचरिताग्निसंबन्धदर्शनबलेनाग्न्यादीन् प्रतिपद्य पश्चात् प्रत्यायकत्वमवगच्छति। अतस्तत्प्रतीत्यनङ्गत्वमित्यभिप्रायः। अत एव संबन्धान्तरेण विना गतिरत्र नास्तीति मन्वानो वैयाकरणः अविनाभावलक्षणमेव शब्दार्थयोः संबन्धमुक्तवान् इत्याह—

तमेवान्योऽविनाभावमत्र सबन्धमिच्छति।
न हि तस्माद्विना शब्दे ज्ञाते स्यादर्थबोधनम् ॥७॥

इति। स त्वयमयुक्तः परिहारः। यदि भाष्यकारेण संबन्धान्तरमुक्तं स्यात् ततः कदाचिदेवमुच्येत। यदा पुनः स एव प्रत्याय्यप्रत्यायकभावोऽभिहितः तदैवमुच्यमानमसंबद्धं स्यात् इत्याह—

तत्त्वयुक्तं न भाष्येऽस्ति तादृक्संबन्धकीर्तनम्।

इति। यदि पुनरेतावतैव भाष्यकारेण संबन्धान्तरमुक्तमित्युच्येत ततोऽनुक्तमेव प्रतीयते इति किमिति नोच्येत। कः खलूक्तेन वाक्येन अनुक्तेन वा अनभिधीयमानत्वे विशेषः इत्यभिप्रायेणाह—

यदि ह्येतावतोच्येत किं नानुक्तः प्रतीयते ॥८॥

इति। अयमस्यार्थः प्रतिभात्येव। यदि हि विना संबन्धान्तराभिधानेन पुनरुक्तमसंबद्धं भाष्यं स्यात्—इत्येतावता कारणेन यदि संबन्धान्तरं प्रतीयेत किं नामानुक्तमपि न प्रतीयेत। न ह्येतावतः कारणात् दोषभयेनावाच-

काङ्क्षीकरणमिति । पराभिमतश्चाविनाभावः शब्दाभ्यासादिनिरासेन निरस्त एवेत्याह—

प्रत्युक्तश्चाविनाभावम्

इति । किमर्थं पुनः संबन्धान्तरेण वृद्धव्यवहारदर्शनात् संज्ञासंज्ञिलक्षणः संबन्धः प्रथममेवात्र प्रतीयते इत्येतदप्युक्तमित्यभिप्रायेणाह—

संज्ञा लोकाच्च गम्यते ।

इति । यत्तूक्तम्—अजानानोऽपि संज्ञात्वम्—इति तदप्ययुक्तम् । यस्मादयमेव शब्दविशेषस्तत्र न ज्ञायते । एतत्पर्यायस्तु गमको वाचक इत्यादिः प्रतीयते एव इत्याह—

संज्ञेत्यगम्यमानेऽपि गमकत्वं प्रतीयते ॥९॥

इति । तस्माद्य एवास्माभिरभिप्रायोऽभिहितः तेनैव प्रश्नमुपक्रम्यान्यपरमपि पूर्वक्रमेण संबन्धकथनं पारमार्थिकमिति परिहारो दातव्य इत्याह—

तस्मात् स एव शब्दार्थचिन्ताव्यवहितोऽधुना ।
नित्यानित्यविचारार्थं संबन्धः स्मार्यते पुनः ॥१०॥

इति । व्यवहितः अन्यपरतां नीतः । पुनर्निश्चयार्थं कथ्यते इत्यर्थः । संज्ञात्वमपि भाष्यकारो नातीवात्र कथयति । एतावदेवानेनोक्तम्—यच्छब्दे विज्ञाते—इति । न पुनरेवमुक्तम्—यच्छब्दे संज्ञाभूते—इति । तदुच्यते । यदि हि तत् संज्ञात्वेन प्रतिपन्नं स्यात् कथं तस्मिन् विज्ञातेऽप्यर्थो न विज्ञायते इत्येतदेवोच्यते । तस्मादन्तर्भाव्यैव गमकत्वशक्तिमेतदुक्तमित्यदोषः । तदेतदाह—

यच्छब्दे ज्ञात इत्येवं शक्तिरेवात्र कीर्त्यते ।

इति । या पुनरस्य शब्दस्य प्रत्यायनशक्तिः सा करणभूतस्य कर्तृभूतस्य वा विवक्षावशेनाङ्गीकर्तव्या इत्युक्तमित्यभिप्रायेणाह—

कर्तृत्वं करणत्वं वा यत्तस्यार्थाभिधां प्रति ॥११॥

इति । अत्र पूर्वपक्षवाद्याह—स तु कृतक इति पूर्वमुपपादितम्—इति । अस्यायमभिप्रायः । मया ज्ञातमन्यपरोऽसावुक्तः । अन्य एव तु रमणीयोऽनित्य

संबन्धोऽस्ति इति। यदि पुनः तत्रैव न कष्टाशा कृतकः तर्ह्यसौ पूर्वोक्तेन मार्गेण—स्वभावतो ह्यसंबद्धौ—इत्यादिना यदि प्रत्याययति प्रथमश्रुतः किं न प्रत्याययतीत्यादिना च। ततश्च या पुनरस्माच्छब्दात् प्रतीतिः सा सामयिकी। पुरुषकृतसमयनिबन्धना इति यावत्। तदेतदाह—

**स्वतो नैवास्ति शक्तत्वं वाच्यवाचकयोर्मिथः।**
**प्रतीतिः समयात् पुंसां भवेदक्षिनिकोचवत्॥१२॥**

इति। अत्र सिद्धान्तभाष्यम्—अपौरुषेयत्वात् संबन्धस्य सिद्धम्—इति अत्र पौरुषेयत्वे यावन्तः प्रकाराः सम्भवन्ति तान् निरसितुमुपन्यस्यति—

**समयः प्रतिमर्त्यं वा प्रत्युच्चारणमेव वा।**
**क्रियते जगदादौ वा सकृदेकेन केनचित्॥१३॥**

इति। समयो हि क्रियमाणः प्रतिपुरुषं वा क्रियते प्रत्युच्चारणं वा। सकृदेव वा जगदादावीश्वरेणेतरेण वेत्यर्थः। तथा हि प्रतिपुरुषं प्रत्युच्चारणं च संबन्धः क्रियमाणः कदाचित् प्रतिपुरुषं अन्योन्यश्च भवति। कदाचित् स एव इति कल्पनीयम्। तदेतदाह—

**प्रत्येकं वापि संबन्धो भिद्येतैकोऽथवा भवेत्।**

इति। तत्र यदि प्रतिपुरुषमेक एवासौ संबन्धः तदा तस्य करणमेव नास्ति इत्यकृतकत्वमेवाङ्गीकृतं स्यात् विद्यमानस्य तदनुपपत्तेः इत्याह—

**एकत्वे कृतको न स्यात्**

इति। भेदपक्षस्तु तद्बुद्ध्यभावेनैव निराकृत इत्याह—

**भिन्नश्चेद्भेदधीर्भवेत्॥१४॥**

इति। किं च यदि प्रतिपुरुषमन्योन्यश्च संबन्धो भवति ततो द्वयी गतिः। कदाचित् सर्वे ते संबन्धविशेषा वाचका अभ्युपगन्तव्याः। कदाचिदेक एव कश्चित्तेषां मध्ये। तत्र यद्याद्यः पक्षः तदा कल्पनागुरुत्वम्। अथोत्तरः ततो

यदा स एक एव व्यापार्यते तदैव प्रतीतिः स्यात् नान्यदा । ततश्च कृतसंबन्धस्यापि कदाचिदप्रतीतिः स्यात् । तदेतदाह—

**भिन्नत्वे प्रतिसंबन्धं शक्तिः कल्प्याभिधा प्रति ।**
**एकस्मिन् ज्ञातशक्तौ वा नान्येनार्थमतिर्भवेत् ॥१५॥**

इति । अथैवमुच्यते । यस्य पुरुषस्य यैः संबन्धः कृतः स तेनार्थं प्रतिपत्स्यते नेतरेण । तेन नैकस्य पुंसोऽनेकशक्तिकल्पना संबन्धान्तरानर्थक्यदोषो वा इति । तदेतदप्ययुक्तम् । एवं हि यद्येकस्यैकेन संबन्धः कृतः स्यात् ततः स तेनार्थं प्रतिपद्यते इति घटेतापि । यदा तु एकस्यानेकैः पुरुषैः अनेकसंबन्धाः क्रियन्ते ततस्तत्रैकावगतिः कथं इति संप्रधार्यम् । तदेतदाह—

**अथ यो यस्य पुंसः स्यात् स तेन प्रतिपद्यते ।**
**यस्यानेकेन संबन्धः कृतस्तस्य कथं भवेत् ॥१६॥**

इति । ननु किमत्र संप्रधार्यम् । बहवस्ते सम्बन्धाः समानार्थाः । तेन येन केनचिदेकेनार्थं प्रतिपत्स्यते इति । तदयुक्तम् । एते नाम विकल्पा भवन्ति यत्रैकमुपादाय परोपादाने यत्नान्तरं कार्यम् । इह तु सर्वनिष्पादितेषु संबन्धेषु येनैवार्थं प्रतिपन्नवान् पुनः पुनः प्रयोगान्तरेऽपि प्रवृत्तिकल्पनान्यायेन तेनैव प्रतिपत्स्यते । किं तत्र संबन्धान्तरापेक्षणेन । अतश्च तद्व्यतिरिक्तानां अन्येषामत्यन्तबाधः स्यात् । कुतो विकल्पप्राप्तिः इति । तदेतदाह—

**एकार्थाना विकल्पश्चेन्नेतरात्यन्तबाधनात् ।**

इति । अथैवमुच्यते । सर्वैरेव तैः सम्बन्धविशेषैः समुदितैरेवासावर्थं प्रतिपत्स्यते इति । तदप्ययुक्तम् । व्यवहारकाले तथा प्रतीत्यदर्शनात् । तदाह—

**समुच्चयोऽपि नैतेषा व्यवहारेऽवगम्यते ॥१७॥**

इति । कीदृशी पुनरत्र प्रतीतिः इत्याह—

